

श्रीश्रीमन्नवराज प्रतिमूर्त्तिः ।

His Majesty King Edward VII,
Emperor of India.

KUNTALINE PRESS, CALCUTTA.



श्रीश्रीमद्राजमहिषी-प्रतिमूर्त्तिः ।

Her Majesty Queen Alexandra,
Empress of India.

KUNTALINE PRESS, CALCUTTA.




श्रीमद्राजप्रतिनिधेः प्रतिमूर्त्तिः ।

His Excellency Lord Curzon,
Viceroy of India.

KUNTALINE PRESS, CALCUTTA.



श्रीमद्राजप्रतिनिधिपत्न्याः प्रतिमूर्त्तिः ।

Her Excellency Lady Curzon,
Vicerene of India.

KUNTALINE PRESS, CALCUTTA.

# दिल्लिमहोत्सव-काव्यम्

काशिका-राजसभापण्डित-

श्रीभास्कर-विद्यालङ्कार-भट्टाचार्य्य-

विरचितम्

# दिल्लिमहोत्सव-काव्यम्

काकिना-राजसभापण्डित-

श्रीश्रीश्वर-विद्यालङ्कार-भट्टाचार्य्य-

विरचितम्

# Dilli-Mahotsava-Kavyam

A

SANSKRIT POEM

ON

# THE DELHI-DURBAR

IN SIX CANTOS

BY

**Srisbar Vidyalankar**

*Subhá-Pandit to the Rájá of Kákiná, and Author of "Vijayiní-Kávyam," "Hemodváha-Kávyam," &c.*

EDITED WITH ELUCIDATIVE NOTES

AND PUBLISHED

BY

**KOKILESVAR BHATTACHARYYA VIDYARATNA, M.A.**

FROM KÁKINÁ, RUNGPUR.

---

**With four Portraits.**

---

1903.



*Price—Rs. 3/-*




# DEDICATED

TO THE MEMORY OF

THE LATE

RAJA SHAMBHU CHANDRA RAY CHAUDHURI

OF

KAKINA

AS AN HUMBLE TRIBUTE

OF

PROFOUND GRATITUDE AND DEEP RESPECT.



## विज्ञप्तिः ।



अथ खल्वितः पूर्व्वं रङ्गपुरेऽस्मिन् वङ्गाङ्गे काकिनाख्यराज्यखण्ड-महाराजो, दानमानादिभिः प्रसन्नीकृतसत्समाजश्चात्मराज्ये सम्पादितसार्व्व-जनीनसंस्कारो, महोदारो, हृद्यया चाप्यर्थविद्यया शिक्षया चाप्यतिविनीतः, शम्भुचन्द्रनामगीतः, सद्विवेको राजैकः प्रादुरासीत् ।

यस्य पुनर्भ्रातुरनन्तरं हस्तन्यस्तराज्यभारः, समुज्जृम्भितनवरत्नसभा-सारः, सम्प्रवर्त्तितविक्रमाख्यभारतारम्भयशःस्तम्भः, सतामग्रगण्यैरगण्यैर्धीर-वरैः प्राचीरैरिव वेष्टितः, कायस्थकुलनभश्चन्द्रो, ज्ञानध्याननष्टतन्द्रो, नव-नियमैरुपबृंहितयशःकिरणां नगरीमिव काकिनामलञ्चकार ।

काशीलाभादात्ममृत्योरभीतस्य जनैरुपगीतस्य तस्यादोषस्य पश्यता-मस्माकम् एकदिनमिव दुःखैरेकचत्वारिंशदब्दाः समतीताः !

उपजातविद्वत्सन्तोषस्य तस्यासाधारणबुद्धेः पुत्त्रः, तुल्यः पितुरधिको वा, साम्प्रतं महिमारञ्जन*नामधरः, भूपतिप्रवरः, सज्जनैरुपगीतः, साधु-चरितत्वेनोपनीतः, स्वयमयं राजा, यशोराशिगुणभाजामग्रेसरः, कुलोज्ज्वल-करश्च, काकिनायां निवसति ।

---

* महिम्ना यः सम्यक् रञ्जयतीति व्युत्पत्त्या ।

यत्र पुनः स्वैरेव सहामात्यैः सत्यवादिभिः सिंहादिभिरुपचीयमानः, काव्यादिकृतनामगानः, स्वानुगतजनरक्तो, राजभक्तग्रामसुखात् चरितैः राजचरितैः प्रत्यहमेव दिवसस्यार्द्धमतिवाहयतीति ।

येन च पुनर्निष्करुणविस्मरणारम्भः कालान्तरे भाविभक्तगणच्युति-विनिवारणाय राजकृतदिल्लीमहोत्सवस्य,—श्रवणाय च पुनरस्याप्यविलुप्तगौरव-गाथाया भारतीयपुण्यकथायाः,—तमेव महोत्सवमधिकृत्य काव्यमेतद्रच-यितुं कविरस्यादिष्टः ।

स्वयमयं दिल्लीग्रामनागतोऽपि, निजानुरक्त्या राजभक्त्या समानाय्य च दिल्लिप्रवृत्तिं, भाविकीर्त्तिप्रेरित इव यत्नाध्यवसाय च प्रेषयन्नादेशं, परि-तोषयंश्च राजादेः प्रतिमूर्त्तिकर्त्तारं, कृतत्वरो, दिल्लीपर्व्वगीतिकाव्यसृष्टितत्-परो, व्यादिदेश च कवये तद्दयापारम् ।

अहो अस्य राजभक्तिः! अहो अस्य पितृवत्काव्यानुरक्तिर्भारत-प्रीतिश्च !

एवञ्च खलु सुचरितस्य तस्य कुमारोऽपि, जनचित्तरञ्जनो महेन्द्र-रञ्जनो, यशःसितश्लाघ्यचरितः, वीर इव त्वरितमेव सम्पादितसर्व्वारम्भः, साधुसंरम्भश्च जयतीति ।

सोऽयं भूरिणा भाग्येन, भोग्येन च पुनरारोग्येण सम्बलितः, पुन-रनलसश्चिरमिह जीवतादित्यलमतिविस्तरेण ।

काकिनायाम्
भाद्रे, १३१० साले

श्रीश्रीश्वर-शर्म्मणः ।





## TABLE OF CONTENTS.

### CANTO I.

CORONATION-ASSEMBLAGE AT DELHI : STATE-ENTRY.

## CANTO II.

### THE CAMPS : THEIR SITES AND DESCRIPTION.



---

## CANTO III.

### AMPHITHEATRE : THE CORONATION-DURBAR : THE PROCLAMATION.

## CANTO IV.

### THE ARTS EXHIBITION : THE EXHIBITS.

## CANTO V.

### MISCELLANEOUS DURBAR-FUNCTIONS : CLOSE OF DURBAR.



## CANTO VI.

### PAST BRIEF HISTORY OF DELHI : NATION'S PRAYER TO THE CROWN.







# CHRONOLOGICAL ORDER

OF THE

## DURBAR CEREMONIES.



| | |
|---|---|
| Inauguration of the Durbar ceremonies by State-Entry : ... ... ... ... | 29th December, 1902. |
| Opening of Exhibition of Indian Arts : ... ... | 30th December, 1902. |
| Durbar and Proclamation : ... ... ... | 1st January, 1903. |
| State-Dinner given by Viceroy to Official Guests : ... ... ... | 1st January, 1903, evening. |
| Viceroy's Evening Party to the Indian Official Guests (at the Kudsia Gardens) : ... | 2nd January, 1903, afternoon. |
| Illumination of Delhi and Display of Fire-works : | 2nd January, 1903. |
| Investiture held in the Dewan-i-Am : ... ... | 3rd January, 1903. |
| Celebration of State Divine Service : ... ... | 4th January, 1903. |
| Military Assault-at-Arms : ... ... | 3rd and 5th January, 1903. |
| State-Ball : ... ... ... ... | 6th January, 1903. |
| Review of the Retainers of Indian Ruling Chiefs : | 7th January, 1903. |
| Grand Review of 34,000 Troops : ... ... | 8th January, 1903. |
| Viceroy's Evening Party to the Chiefs and Investiture (at the Viceroy's Camp) : ... ... ... | 9th January, 1903. |
| Athletic Contests—Polo, Football, Hockey : On most days, specially on... ... ... | 9th January, 1903. |
| State-Departure : ... ... ... ... | 10th January, 1903. |



# संशोधनी ॥

| पृष्ठ | पंक्ती | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २ | मारीं | मारीम् |
| ६ | ११ | कामयन्ती | कामयन्ते |
| ११ | ६ | गुण | गुणे |
| १२ | १२ | सुदग: | सुदगु: |
| १५ | ५ | जाज्ज्वल्यमानं | जाज्ज्वल्यमानं |
| ४ | १८ | "तत्करोतीति" क्वचित् | आचारार्थे क्वचित् |
| ४२ | ५ | क्याम्पं | कैम्पं |
| ८ | ८ | क्याम्पं | कैम्पं |
| ० | १० | नामार्थम् | वासार्थम् |
| १ | १४ | magnificient | magnificent |
| १ | १२ | दफ्फप | दफ्फपे |
| २ | ४ | चमत्क | चमत्कु |
| ६ | १० | मदिनी | मेदिनी |
| ८० | ३ | सर्व्व | सर्व्वं |
| ०१ | ८ | फलका | फलका: |
| ४३ | १९ | आरभ्यते | आरभते |
| ४९ | २२ | सुद्रव | सुद्रैव |
| ५१ | ७ | तङ्गी | ताङ्गी |
| ५८ | १० | माधर्य्य | माधर्य्यं |
| ६२ | ६ | कुशला: | कुशलै: |



# दिल्लिमहोत्सव-काव्यम् ।



## प्रथमः सर्गः ।



महाचित्तो भिन्नामपि पुनरभिन्नां कुहकिनीं
घटादिं पश्यन्तीं घटपटमठादिं स्वयमपि ।
स्थिरामर्थातीतामपि च पुरुषार्थाय चपलां
नुमस्तां निर्लिङ्गामपि सदबलां चेतनकलाम् * ॥ १ ॥

---

* मङ्गलाचरणं करोति । महाचित्तः—परमात्मतत्त्वम् ; विश्वव्यापकचैतन्यादित्यर्थः । स्थिराम्—निष्क्रियाम् । पुरुषार्थाय चपलाम्—भोगापवर्गौ पुरुषार्थः, तत्कृते चपलां क्रियाशीलाम् । (Vide Sáṅkhya-darśanam, Ch. III., 58). प्रकृतिं पुरुषञ्च एकीकृत्य स्तौति । तामिति मधिकार्थम् ।

के वा शेषयितुं भवन्त्यलमहो पाश्चात्त्यजातेर्गुणान्?<br>
यस्यां सम्प्रति कार्ज्जनप्रभृतयो लब्धोदयाः पार्थिवाः।<br>
तुङ्गाङ्गी प्रतिपादिता नरपतेर्यैरुत्सवप्रक्रिया,<br>
यन्माद्यत्यधुनापि दिल्लिनगरे जागर्त्ति शेषच्छटा * ॥ २ ॥

अहो राज्ञः कीर्त्तिः! कतिपयदिनैर्दिल्लिनगरी<br>
बभौ मुक्तायुक्ता कनकमणिमाणिक्यखचिता।<br>
तृणाच्छन्ना पूर्व्वं जटिलगहना गोक्षुरवना<br>
वरा स्वर्गाकारा नृपतिशतदारासनवती † ॥ ३ ॥

स्वमेके खृष्टीये जगति वितते विंशशतमे<br>
परानन्दागारं किमपि भुवि पर्व्वेदमुदभूत्।<br>
धनुष्यर्के याते, दशदिवसमायुः परिवहन्-<br>
न यद्गच्छेत् कस्मिन्नपि हृदि नृणां विस्मृतिपदम् ‡ ॥ ४ ॥

अजयदिदमपूर्व्वं भूतपूर्व्वञ्च सर्व्व-<br>
मजनि यदतिमात्रं दिग्दिनस्थायि पर्व्व।

---

* दिल्लिमहोत्सवं प्रस्तौति। तत्रादौ दिल्ली सम्पादितस्य राज्याभिषेकपर्व्वणः प्रस्तावनां करोति (२—७)। इंलण्डाधिपतेः राज्याभिषेकघोषणार्थं दिल्ल्यां दशदिवसं व्याप्य महोत्सव आसीत्। यस्याम्—पाश्चात्त्यजातौ। कार्ज्जनः—Lord Curzon. यैः—कार्ज्जनादिभिः। दिल्लिनगरे—In the city of Delhi. प्रतिपादिता—Effected, produced.

† Compare :—"A month ago there was little to be seen from the "Ridge," but a sandy, bouldered *waste*, interspersed here and there with rice-fields and an occasional canal." गोक्षुरवनेति—उपसर्ज्जनत्वात् न ङीष्, पाणिनिः ४।१।१४।

‡ स्वमेके—संवत्सरे; "यव्यो मासः, स्वमेकं संवत्सरम्" इत्यनुशासनात्। पर्व्व—राज्याभिषेकमहोत्सवः। दशदिवसम्—From the 1st to the 10th of January 1903.

ऋदुदिनमथ मासं दीपयद् जानुयारीं
सुखकरहिमपातैर्दूरयल्लोकमारीं * ॥ ५ ॥

खृष्टीयवर्षे सशते च विंशे
राजप्रभावोद्धृतलोकहिंसे ।
अपूर्व्वपर्व्वैदमनुष्ठितं प्राक्
तज्जानुयारेः † प्रथमेऽह्नि भाभाक् ॥ ६ ॥

दशमितदिवसं संव्याप्य सत्कीर्त्तिरेषा
दशदिशि परिभाता कार्ज्जनीयं ‡ सुवेशा ।
दशशतकरधारी यत्र साहाय्यकारी
दशनियुतसहस्रैर्लोचनैर्योऽभ्यधारि ॥ ७ ॥

दुर्व्वारारिनिवारि यस्य चरितं जेगीयते क्ष्मातले
यस्याश्चैमहिमाद्यधिष्ठितजनः श्रेयः प्रसूते नृणाम् ।
यन्नामस्मृतये चिराभिलषितं पर्व्वैदमुर्व्यामभूत्
सोऽयं भारतखण्डनाद्यधिपतिर्जीयाच्चिरं भूतले § ॥ ८ ॥
योऽसौ भारतवर्षसर्व्वनगरे राजीकृतो वेधसा
राज्यं तच्च विशीर्णकण्टकदलं यत्तेजसाऽस्त्युज्ज्वलम् ।

---

* जानुयारीं मासम्—*i. e.* January 1903. दिग्दिनव्यापि—दशदिनव्यापि । पूर्व्वं भूतमिति भूतपूर्व्वम् । "भूतपूर्व्वे चरट्" इति सूत्रे दर्शनात् पूर्व्वशब्दस्य परनिपातः, सुप्सुपेति समासश्च । भजयदिति—अभिभवार्थे सकर्म्मकः । ऋदुदिनम्—इति पदं 'पर्व्व'स्य विशेषणम् ।

† January 1903. उद्धृता—*i. e.* Eradicated.

‡ कार्ज्जनी—कार्ज्जनसम्बन्धादितेत्यर्थः । कार्ज्जन—Lord Curzon.

§ भाद्यो श्रीश्रीमत्सम्राजीयसुतः (The King-Emperor) गीयते । यन्नामस्मृतये इत्यादि—

दिल्ली * यत्कृतपर्व्वगौरववती नारीव रत्नोज्वला
यत्कीर्त्तिस्तुतिकीर्त्तनातिमुखरा जागर्त्ति पर्व्वस्मरा ॥ ९ ॥
गायन्तो यस्य सर्व्वे प्रकृतिगणमनोमन्दिरे राजराजं
के वा तं विस्मरिष्यन्त्यखिलजनपतिं, यातमप्यात्मदेशे ? ।
लण्डेशस्याभिषेकप्रभृतिभिरसकृत् येन संशोभिता भूः †
सोऽयं सस्नेहदृष्ट्या स्थिरयतु सकलं कार्ज्जनः कार्ज्जनी च ॥१०॥
सोऽयं जीवतु दुर्ज्जनव्यसनदो नाम्ना च यः कार्ज्जनः
प्राप्तो लण्डनभूपतेः प्रतिनिधिः प्रेयांश्च यः सज्जनः ।
अत्याश्चर्य्यनृवर्य्यचारुचरितै राज्ञादिनामिंलिशां
राज्ञ्या‡प्युच्चयशःप्रसन्नमनसा यो भारते प्रेषितः ॥ ११ ॥
(विशेषकम्) ।
"अस्मिन् पर्व्वणि सर्व्वपर्व्वनृपतौ तस्य प्रयत्नोत्थिते
दिल्ल्यामन्यतरत् विशेषविधिना द्रव्यैर्जगन्निर्म्मितम् ।

*i. e.* The event being the proclamation of Edward the Seventh as Emperor of India.

* तदनन्तरमधुना राजप्रतिनिधेः (Lord Curzon) स्तुतिः गीयते (९—११)। "The day of Lord Curzon's entry into the city of the Moguls, in full state, will be marked in the annals of British India as the day of a most impressive pageant." सत् राज्यं—*i. e.* भारतम्। पर्व्व उत्सवं स्मरतीति पचाद्यच्; ततः स्त्रियामाप्। पक्षे स्मरो मदनः।

† "No *previous* representative of the crown has been called upon to play a part in so superb a display of the wealth, diversity and unity of the *Indian empire.*" कार्ज्जनी—*i. e.* Lady Curzon. स्थिरयतु—"बहुलमकण्यात् स्थिरयत्यपी"ति वर्त्तमानः।

‡ राज्ञ्या—विजयिन्या स्वर्थः (Queen Victoria). [Vide Author's "विजयिनी-काव्यम्" ।] इंलिशाम्—इंराजजातिस्त्रियः। सथा राज्ञ्या—*i. e.* विजयिन्या।

एहि भ्रातृसमूह ! चारुमहिमन् ! भूत्वा मिथः सङ्गताः
दृष्टां मिष्टरसैरसालरचनामेतां समस्राम ताम् * ॥ १२ ॥
आनन्दाम्रुतधारया प्रवरया राज्ञाञ्च मर्य्यादया
धौता द्राक् जनसागरप्रथितवाक् दिल्लयद्य हिल्लोलभाक् ।
एकत्रैव विलोकयन्ति मनुजा यां वीक्ष्य सर्व्वं जगत् †
तैस्तैर्द्रव्यवरैर्नरैः सहचरैर्भूपैश्च रूपैरपि" ॥ १३ ॥
इत्येवञ्च कुतूहलध्वनिरभूत् अत्रा तथात्मध्वनिः
काश्यां काञ्चनकीर्त्तिमत्र महतीं द्रष्टुं समुद्घोषिताम् ।
उद्ग्रीवस्तुतयो वयं खलु गतास्तां दिल्लिमात्मेच्छया
ये राज्ञः सचिवैः स्मृता न च हृताः पत्रा न सम्भाषिताः ‡॥१४
(विशेषकम्) ।

राज्ञीसूनुकृतेऽत्र नूतनमहाराज्याभिषेकोत्सवे
राजानश्च निमन्त्रिताः पुलकितास्तद्दर्शनाभ्युत्थिताः ।
लोकानामपि हर्षवर्षणगिरा नासीद्धरा सुस्थिरा,
हस्त्यश्वोष्ट्रगणैर्जनैरगणनैर्या प्रेक्षितुं दुष्करा § ॥ १५ ॥

---

* सम्प्रति दिल्लि-महोत्सवः प्रस्तूयते (१२—१४) । "The procession which traversed the historic city has probably never been *equalled* in Indian history." तस्य—काञ्चनस्येति यावत् । वयं तामेतां मिष्टरसरचितां रचनां समस्राम इत्यर्थः ।

† यां दिल्लीं वीक्ष्य सर्व्वं जगदेकत्रैवानीतमिव पश्यन्ति लोका इति तात्पर्य्यार्थः ।

‡ श्लोकद्वयोक्तो जनमुखतः प्रादुर्भूतः कुतूहलध्वनिः अभूत् प्रादुर्बभूवेति भावः, तथा आत्मध्वनिः अत्रापि दिल्ल्युत्सवदर्शने अनुराग आसीत्, मम मनसीति शेषः । वयं राजपुरुषैरनिमन्त्रिता अपि उत्सवदर्शनार्थमात्मेच्छयैव दिल्लीं गता इति कविः स्वयं वदति ।

§ अधुना दिल्लिप्रवेशं (The State Entry) वर्णयितुं प्रस्तूयते । तत्रादौ दिल्ल्यामुत्सवमुद्दिश्य मनुष्यसमागमः जनताडम्बरादिश्च प्रथमं कथ्यते (१५—४२) ।

यादृक् शब्दो रघुपतिकृते संक्रमे चारसिन्धोः
ख्यातो रामायणत इह यः पर्व्वतोत्पाटनाद्यैः ।
तादृक् रावो * दिशि दिशि गतो दिल्लिसांयात्रिकाणां
व्यस्तं लौहं शकटमुद्‌भूत्कम्पिता तेन धात्री ॥ १६ ॥

प्रेक्षार्थं भूमिभाजां नृपति-नरपतेः पर्व्वणः सर्व्वकान्तै-
रैश्वर्य्याणां परार्द्धैरतिशयमुखरा भूरभूद्दिल्लिरत्नैः ।
तेषामुत्तुङ्गमानात् व्ययितबहुधनात् सर्व्वतः पर्व्वताभात्
जातास्तेऽस्मिन्निवोच्चैरपि च कृशधनाः, दुर्बला राजलक्ष्मीः † ॥ १७ ॥

नापश्यन् यांश्च जन्मावधि भुवि मनुजा लीलया तानपश्यन्
ते भूपा वाप्यभूपाः परिचितिमुदगू राजराजोत्सवेऽस्मिन् ।
अश्वावन्तोऽप्युपेयुर्हयगजसहिताः सैन्यवन्तोऽन्यवन्तो
द्वारे द्वारे लसन्तो धृतटिकिट‡घटा दिन्मवो मानदानम् ॥ १८ ॥

भिक्षायन्ते द्विषन्तः क्षितिनगरभुजो मङ्गलं कामयन्तो
बद्धाः पूर्व्वोपकारैर्नरपतिसुहृदो योधयन्तो विपक्षान् ।

---

* रव एव रावः, प्रज्ञादिभ्योऽण् । लौहं शकटं—The Railway carriage. धात्री—पृथिवी । सांयात्रिकानामिति प्रयोजनार्थं ठञ् ।

† नानाप्रदेशेभ्यो दिल्लीमुत्सवदर्शनार्थं लोका उपस्थिताः इति तदेव कथयति त्रिभिः । "In spirit therefore, and one may almost say through their rulers and deputies in person, there is represented in this arena nearly *one-fifth of the entire human race.*"—Extract from the Viceroy's Speech. नृपतिनरपतेः—कार्ज्जनस्य, पर्व्वणः—उत्सवस्य प्रेक्षार्थमित्यन्वयः । ते भूमिभाजः कृशधना इव जाताः ; तेषां राजलक्ष्मीश्च दुर्बला जाता ।

‡ टिकिट—The Admission-tickets,

दुःखाद्दुःखे सहायास्तनुमपि समरे हातुमिच्छन्ति चान्ये
जागर्त्तीत्थं प्रभावो जगति नरपतेर्लण्डनच्छत्रभाजः ॥ १९ ॥
ते नास्मिन् सन्ति भूपा बृटिशनरपतेरुत्सवे ये न दृष्टाः
इंलण्डात् हाइलण्डात् प्रुषरुषपदतस्तत्र पातालराज्यात् ।
आब्रह्मस्तम्बतो द्राक् जनगणसहिताट्टान्सभालप्रदेशा-
दाजग्मुस्ते बुयाराः परिणतशिरसो वैरमुत्सृज्य दूरे * ॥२०॥
केचिद्राज्ञो विवाहभ्रम इव पतिताः सूत्सवौत्सुक्यवन्तः
पत्रा वामन्त्रिताः केऽप्यतिथय इव केऽभ्यागताः केचिदन्ये ।
ईयुर्नाम्नैव केचिज्जयजयवचसा पर्व्वणः सर्व्वकान्ते-
रिच्छासंक्रामिताः केऽप्यभिमतरुचयस्तूर्णमर्घव्ययौघैः ॥ २१ ॥
अङ्गाद्वङ्गात्कलिङ्गान्मलयगिरिपथाद्दाक्षिणात्यप्रदेशात्
केचिन्माद्राजराज्यात् सिक्किमजनपदात् चीनहूनाच्च केचित् ।
ओढ्रान्तःपातिभूमेर्मणिपुरनगराद्ब्रह्मदेशाच्च गौडात्
पर्व्वण्यप्युत्सवेऽस्मिन् निखिलनृपतयश्चक्रिरे योगदानम् † ॥२२॥

* अनेन श्लोकेन सम्प्रति विदेशीयप्रदेशविशेषाणां कतिपयनामानि उल्लिख्यन्ते, येभ्यः दिल्लीं लोकाः समागताः। "The representatives of *Foreign* Powers, the Foreign Consular Officers were also present". इंलण्डात्—England. हाइलण्डात्—The Highlands (in Scotland). पातालराज्यात्—*i. e.* From America; प्रुषरुषपदतः—Baron Speck von Sternburg (Consul-general for Germany), M. W. de Klemme (Consul for Russia). ट्रान्सभालप्रदेशात् बुयाराः—The Boers from Transvaal. (For an account of the Boers and the Boer War, see Author's "Vijayiní-Kávyam," Canto V.)

† अधुना येभ्यः भारतीय-प्रदेशेभ्य उत्सवार्थं दिल्लीं लोकाः समागताः, तेषां भारतीयप्रदेशविशेषाणां कतिपयनामानि समुल्लिख्यन्ते (२१—२४)। "*All India* welcomed Lord Curzon,

केचित् शीताद्रिमौलेर्जलनिधितटतः सेतुबन्धातिदूरात्
विन्ध्याद्रेस्तुङ्गश्रृङ्गात् शिखनृपतिभुवः कान्यकुब्जात्तथान्ये ।
स्वर्गात्काश्मीरनाम्नो जवनजनपतेः काबुलात्सिन्धुदेशा-
दाजग्मुर्द्रांक् तथान्ये भुवननृपतयस्तत्र तुच्छीकृतार्थाः* ॥२३॥

बिकानेर्बुन्दीतः पुनरपि च टङ्कात्कतिपये
जना आलोयाराः, शिवजिकुलजाश्चापि धनिनः ।
तथा जापानाख्यादपि जलनिधेः पूर्व्वतटतः
परास्ताश्चीनाद्याः समरभुवि येषां भुजबलैः † ॥ २४ ॥

भूपाला बलवज्जनैः परिवृताः श्यामात्प्रदेशाद्‌व्रभु-‡
मेरश्चोत्तरपश्चिमाद्धिमगिरेः सर्द्दार-दीराधिपाः ।

not merely those states and provinces which are presided over and administered by Englishmen, but those also which have remained in a varying measure independent." वङ्ग:—Bengal proper, including Bhagalpur ; वङ्ग:—Eastern part of the modern province ; कलिङ्ग:—Extending from below Cuttack to the vicinity of Madras ; मलयगिरि:—The Western Ghats ; मान्द्राज:—Madras ; सिकिम:—Sikim ; चीन:—China ; हुन—A Hun ; औद्र:—Orissa ; ब्रह्मदेश:—Burma ; गौड़:—Central part of Bengal, from *Banga* to *Bhuvaneswar* in Orissa.

* कान्यकुब्ज.—Modern Kanouj ; काश्मीर—Káshmír ; काबुल—Kabul (Afganistan) ; सिन्धुदेश:—The Sindh. शिखनृपतिभुव:—*i. e.* The chiefs from the Cis-Satlej states, such as, Patiala, Jhind, Nava, Maler-kotla.

† The first two lines mention various Indian states in *Rajputana* and the Marhatta provinces. बिकाने:—The Bikanir state ; बुन्दीत:—The Bundi state ; टङ्कात्—The Mahomedan state of Tonk ; आलोयारा:—Alwar state. शिवजिकुलजा:—*i. e.* The Marhatta chiefs, descendants of Sivaji, the great Marhatta chief. जापान:—Japan ; "Lieut.-General Barow Jamkata Oku represented the Japanese Government."

‡ श्यामात्—The Siam state.

यस्मिन् कोऽपि न चाप भूपपदवीं रक्तस्य पातं विना
तस्माच्चित्रलनीवृतो हिमभृतो मेहर् तथाऽभ्यागत: * ॥२५॥
तथा दृष्टश्चास्मिन् निधिपतिसम: पश्चिमदिश:
खिलातख्यात: खाँ, † यदनुगजना भैरवदृश: ।
स्वयं भीमो भीमाकृतिभिरपि पाठाननिकरै-
र्वृहन्मस्तन्यस्तस्फुटमुकुटभीमद्युतिधरै: ॥ २६ ॥
खायीबारगिरे: पथाप्यवितथालापै: स्तुवन्त: सभां
सर्द्दाराश्च पुन: शताङ्कविमिता: पाठानवृन्दै: समम् ।
बोलाना: करमाश्च पश्चिमदिश: सर्व्वे च ते भूरिशो
वेशैर्वस्त्रविशेषभाविलसितैरीयु: सुभीमा इव ‡ ॥ २७ ॥
किरीटं बिभ्राणा: करहरणकालेषु च यथा
तथैव ब्रह्मौकोमगनृपतिवर्गा रुरुचिरे ।

---

* प्रदेशविशेषानुल्लिख्य, सम्प्रति मीरेत्यादिना दिल्ल्यां समागतानां कतिपयजातीनां (Nationalities) विशेषेणोल्लेख: क्रियते (२५—३१)। तत्रादौ पश्चिमोत्तर-सामन्तपतीनां चित्रलाधिपतेश्च कथामुल्लिखन्ति। मीर:—Mir of Nagar and of Hunza (North-western frontier); सर्म्मूर – Raja of Sirmur (Punjab); दीर—Nawab of Dir; मेहर्—*i. e.* The Mehtar of Chitral (N. W. frontier).

† खिलाताधिपते: कथामुल्लिखत्यनेन (Khán of Kalat in Beluchistan),

‡ अनेन आफगानप्रदेशीया:वर्ण्यन्ते (The Afgan and Pathan chiefs). खायीबार-बोलानौ—Two mountain passes in the North-western frontier; The Khyber and Bolan passes; सर्द्दारा:—The Chiefs; पाठाना:—The Páthâns; सभाम्—*i. e.* The Proclamation-Amphitheatre. *Vide* also notes on stanza 30. ईयु:—कर्म्मायिमधायामकर्म्मक:; अथवा ईयुर्दिल्लीमिति शेष:। करमा:—Kuram pass.

गलद्ग्रीवेग्रीवेरचितकचबन्धा मगदृशो
बभुर्येषां पार्श्वे वरमगरमण्योऽपि शतशः * ॥ २८ ॥

वराङ्के गौराङ्गा मणिपुरभुवो ह्रस्ववपुषो
वहन्तो भूयिष्ठं धवलगुलिकान् हारनिकरान् ।
विचित्रा वाहाढ्याः कति च शबलैः प्रच्छदपटै-
र्भ्रमन्तः सोष्णीषाः पथि विरलगुम्फा ददृशिरे † ॥ २९ ॥

विलोचीस्थानस्थाः कतिपयजनास्तुन्दिलधना-
स्तृषा कृष्णास्तृष्णा दृशि दृशि नयन्तो भुवि नृणाम् ।
इहाजग्मुर्यज्ञे नृपतिरचिते पर्व्वणि नवे
बृहत्कायाश्छायाच्छुरितवदना नष्टकदनाः ‡ ॥ ३० ॥

बृहत्मस्ता वीरा इव वरबलप्रांशुवपुषो-
वरांशुप्रच्छन्नाः § कति कति वरोष्णीषशिरसः ।

---

* अनेन ब्रह्मदेशीया वर्ण्यन्ते (The Burmese chiefs). 'ब्रह्मीक' इत्यादि—ब्रह्मदेशः ओकः निवासस्थानं येषामित्यर्थः । मग is the Bengali designation of the Burmese people. *Vide* also Canto II, 73.

† अनेन मणिपुरदेशीया वर्ण्यन्ते (The Manipuris). शबलैः—रक्तासितवर्णभूषितैः, of variegated colours. प्रच्छदपटैः—गात्रवस्त्रैः, Wrappers, cloaks. वाहाढ्याः—*i. e.* With horses. "The Manipuris rode pigmy ponies without saddle of any sort." गुम्फः—Mustachio, whisker.

‡ त्रिभिर्विलोचीस्थानदेशीया वर्ण्यन्ते (The Baluchis) (३०—३२)। "The most attractive and striking feature was the bands of *Baluch* and *Pathan* chiefs. Their dark faces, long hair and twisted beards gave them a wild look that was certainly romantic."—*Englishman.* तृष्णाः—दर्शनोत्सुक्यानीत्यर्थः। छाया—कान्तिः ।

§ "The Baluchis wore long flowing garments."

यशःस्तम्भाः सम्भावितनृपचतुर्दिग्जयकथाः
पथा ये धावन्तो नृपतिस्थितवन्तोऽद्भुतरुचः ॥ ३१ ॥
त एवागत्यास्यां जनखचितदिल्ल्यां विषयिनो-
ध्वजश्रेणीदीर्घाः पथि पथि सुशोभाघाटनपराः ।
विघूर्णन्तः सन्तो धनविकरवन्तो रुरुचिरे
गुणराज्याकारा नवकिरणधाराम्बरधराः ॥ ३२ ॥
(विशेषकम् ।)

कूजत्कोकिलकोकिलाशुकशुकीश्यामाभिरामैर्दृढैः
के चान्येऽप्यरुणैस्तथैव तरुणैर्दृक्खञ्जनीरञ्जनैः ।
कैः कैरन्यहिरण्यकाररचितैः कैः पिञ्जरैः पिञ्जरैः
शोभां वर्द्धयता जनेन महता सार्द्धं समभ्यागताः* ॥ ३३ ॥

भुवि ख्याताः सिंहा इव कटिषु बद्धांशुकचयाः
प्रकाण्डा वक्षोभिः कति कति च नग्नार्द्धवपुषः ।
प्रदेशेभ्यस्तेभ्यः परिचितबला लम्बितकचाः
स्फुटोल्लासा दिल्ल्यां द्रुतमुपययुर्मल्लनिचयाः † ॥ ३४ ॥

---

* पिञ्जरैः शोभां वर्द्धयता जनेन सार्द्धं केऽप्यन्ये तत्र आगता इत्यन्वयरीतिः । पिञ्जरैः—पिङ्गलवर्णैः (Reddish yellow) इत्यर्थः ; पिञ्जरैः—Cages ; शुकः—Parrot ; श्यामा—Turdus Macrourus.

† अस्मिन् महोत्सवे दिल्ल्यां समागतानां विविधानां मल्लानां वर्णना, तेषां क्रीडादिकञ्च उल्लिख्यते (३४—३७) । The four following stanzas describe hundreds of reputed *Palwans* (wrestlers and athlets) from various provinces of India, who met and showed their skill in many of the noted Indian chiefs' tents (34— 37).

अभूत् सास्मिन् गोपीवसनलतिका वृक्षकलिका-
जटाजूटे लग्ना, गतिरपि च भग्ना चरणयोः * ॥४२॥
तस्मिन् कीर्णे जनौघैः प्रविलसति वृहद्भूमिखण्डाधिराजे
साहेबाद्यैश्च सैन्यैर्नयनकुसुमिते दिल्ल्यलङ्कारकारः ।
लक्ष्मीमादाय वामे प्रतिनिधिरुदगात् लण्डनस्याधिभर्त्तुः
स्रष्टा पर्व्वेन्दुमूर्त्तेर्दलबलसहितः कार्ज्जनः ख्यातनामा † ॥४३॥
आयान् किञ्चिद्विलम्बो लसति जनगणे जायया तत्र हृष्टो
राज्ञो भ्राता गरीयान् कनट् इति सहसा सर्व्वलोकैश्च दृष्टः ।
काम्यं राजासनं प्राक् विरचितमुदभूत् सज्जितं हस्तिदन्तैः
लोकालोके समन्ताच्छविनिभ सुमुखज्योत्स्नया कृत्स्नयाक्तो ‡ ॥४४

---

* अभिषेकोत्सवानन्दसमये दिल्लीनगर्य्यां वृन्दावनसाम्यं नाटयति कविरनेन । अस्मिन् समये पुरेव गोपात् पृथिवीपालकात् राजपुरुषात् मुरलीध्वनिः महोत्सवानन्दवंशीध्वनिः प्रादुर्बभूव, तथाधुनापि कण्टकिलतो विचरणात् रमणीनां वसनानि वृक्षादिलग्नानि छिन्नानि च बभूवुः । यमुनासलिलम्—"Delhi occupies a broad plain, bounded by the river *Jumna* on the East."

† सम्प्रति राजप्रतिनिधेः (Viceroy) राजभ्रातुश्च (Duke of Connaught) दिल्लाग्रामागमनं (Arrival at the Railway station) वर्ण्यते (४३—४६) । "His Excellency the Viceroy and Governor-general arrived at Delhi at 11.30 A. M., Dec. 29, 1902. The Salute of 31 guns was fired announcing the Viceroy's arrival. कार्ज्जनः—Lord Curzon. भूमिखण्डाधिराजे—दिल्लिनगरे । दलबलसहितः—With staff.

‡ "At 11-45 A. M., Their Royal Highnesses, the Duke and Duchess of Connaught arrived by special train from Bombay and were received by His Excellency. A royal salute of 31 guns was fired from the Fort." कनट्—Duke of Connaught. लोकालोके—लोकानां तत्रागतानां मनुष्याणाम् आलोके दर्शनपथे पूर्व्वमेव हस्तिदन्तं सज्जितमुदभूत् इत्यर्थः ।

एकत्रिंशद्ध्वनिद्रीक् नलमुखकुहरात्तस्य सम्मानताया-
माग्नेयः श्रौत्रपेयः करितुरगनृणां व्यानशे व्योम्नि सीम्नि ।
राजभ्रातुश्च तद्वत्, दिनकरकिरणादस्त्रसम्पातभाता *-
देकं तद्वासरं सत् दिनशतविनिभं सच्छटं प्रादुरासीत् ॥४५॥

तस्मिन् काले द्युतीनां किमपि विकिरणं यच्च जाज्वल्यमानं
यद्दृष्टं व्योम्नि देवैरिव रथगतिभिः सर्व्वगन्धर्व्ववर्गैः ।
राजभ्रातुर्नृपाणां परिचयभणिति† र्हर्षदोःस्पर्शनन्तत्,
कर्णे पीयूषधारेव च मम गलिताद्यापि या नैति दूरम् ॥४६॥

तत्रानन्दवनाधिनाथकरिणि प्रोद्भूतरत्नप्रभे
तुङ्गे रञ्जितहैममञ्चफलके दृष्टो बभौ कार्ज्जनः ।
तत्पश्चाच्च तथा यथा विरुरुचे कुम्भे वहन् चारुणा
राजभ्रातरमुच्चकैर्जयपुरव्याक्रीड़भूमिः करी ‡ ॥ ४७ ॥

---

* "A guard of honour was drawn up and presented arms, as His Excellency accompanied by their Royal Highnesses emerged from the Station." अतएव "अस्त्रसम्पातभाता" दित्युक्तम् । तस्य— कार्ज्जनस्य इत्यर्थः । नलम्— नालीकास्त्रम् ।

† "The Principal chiefs and officials were then presented to His Royal Highness."

‡ अधुना राजप्रतिनिधिः राजभ्रातुश्च हस्तिपृष्ठारोहणं वर्ण्यते (४७—४८) । "The Viceroy in court dress and Lady Curzon were seated on an elephant from Benares, followed by the Duke of Connaught's from Jaipur." आनन्दवनाधिनाथः— काशीपतिः । फलकम्—Bench (Prof. Wilson).

आरूढौ च मतङ्गजोपरि तदा कम्पेन मौलेस्तथा *
प्रीतिस्निग्धदृशा भृशं पथि गतान् सम्भावयन्तौ जनान् ।
शुण्डोत्तोलनकण्ठघर्घररवानन्दैः करीन्द्रा मुङ्ः
प्रातिष्ठन्त किमु प्रसादसुमुखावेतौ प्रणामादरैः ? ॥ ४८ ॥
आरूढेष्वथ तेषु राजसु तथा पृष्ठे तदा दन्तिनां
पार्श्वे राजपथस्य काचिदुदियायोच्चैः प्रभा मेचका ।
सङ्केतेन च तेन तेन चलिता मातङ्गवर्गा द्रुतं
रेजुर्नृत्यपरायणा गलगलद्घण्टासमान्दोलनैः † ॥ ४९ ॥
मार्गाग्रेऽस्मिन्नदृष्टे मरकतखचिते मत्तमातङ्गपृष्ठे
खट्वामुत्तोल्य हैमीं तदुपरि परितो राजिता राजराजिः ।
राज्ञां मध्ये निजामो जवनजनपती राज्यसत्कार्य्यशौर्य्य-
वंशैः श्रेष्ठैः सुदृश्यैः सहचरसहितस्तत्र काश्मीरभर्त्ता ‡॥५०॥

---

* "Lord Curzon............incessently acknowledged the plaudits of the crowd by *bowing* and touching his white *helmet.*" प्रातिष्ठन्त—'समव-प्रविभ्यः स्थः' इत्यनेनात्मनेपदम् ।

† तदनन्तरमिदानीं भारतीयनृपाणां हस्तिपृष्ठारोहणं वर्ण्यते (४९—५३) । "A signal was given for the Escort to start, and the *Ruling chiefs* moved forward *two by two* behind their Royal Highnesses, the Duke and Duchess of Connaught, in the order in which they were placed on the Road." "Then came the gorgeous animals of the ruling chiefs, 54 in number."

‡ "Outside were drawn up in an imposing array the gaily caparisoned lines of state elephants, that of the *Nizam* being at the *head* of those of the Native chiefs." खट्वाम्—*Houdas.*

काश्मीरमण्डलपतिः करितुङ्गपृष्ठे
सर्व्वाग्रएव सनिजामपतिर्नृदृष्टे ।
रेजे निकाममहिमाद्युतिरञ्जितस्य
तस्मिन्ननागमतया वरदेश्वरस्य * ॥ ५१ ॥

एवं दिल्लिप्रवेशे करिशिरसि समारूढदेवेन्द्रलीला-
राजानोऽन्येऽपि रेजुः शतरथिरचिरे युग्मयुग्मक्रमेण ।
केचित्तत्रोष्ट्रपृष्ठे गतिरभसचलत्किङ्किणीनादरम्ये
केचित्कृष्णे तुरङ्गे, द्युतिमति शकटे केचिदुत्साहवन्तः † ॥५२॥

तत्राध्वन्येव हर्षादुपरि निपतितं रिङ्खणादङ्गमङ्गे ‡
नृणामेका स्त्रिया स्त्री कनकविकिरणा भारतीया विरेजे ।
मन्ये सा पर्व्वकर्त्तुः प्रणयशतभृतः कार्ज्जनस्य प्रियायाः
प्रेम्णा सौन्दर्यमूर्त्तेः परमसहचरी प्रादुरासीत्तदानीम्॥५३॥

---

* "The Maharaja of Baroda owing to a family bereavement and the Maharana of Udaipur owing to indisposition were unable to attend the State-Entry." सनिजामपतिः—निजामपतिना सह पार्श्वे वर्त्तमानः ।

† "The *Carriages* of His Royal Highness the Grand Duke of Hesse, of the Heads of Local Governments &c. &c. and the *Horses* of His Excellency the Commander-in-chief, of the Khan of Kalat &c. &c. were arranged in order along the Queen's Road." "The *Camel* corps from Bikanir &c. with riders in chain mail were most effective."

‡ हर्षात्पथि दर्शकानाम् चक्षुम् अन्येषामङ्गे निपतितमासीत् ; रिङ्खणात् सरभसचलनात् दिदृक्षार्थमिति भावः । तस्मिन् पथि काचिद्भारतीया नारी करिपृष्ठे ददृशे । "One solitary Indian Lady rode on an elephant."—*Bengalee, January 2, 1903.*

स्फीतिज्वालोग्रहर्षाः परिपतनरयादुद्यदुष्णीषकम्पा-
रथ्यामार्गे विचित्रा विविधगतिरसोद्गारिसञ्चारलीलाः।
सेनामाला मणीनां किरणघनघटाधौतमौलिस्थलीना-
मुच्चैःस्वच्छाभिराभावलिभिरिव तदा रेजिरे पार्श्वयोस्ताः*॥५४॥

सेनानां काप्यभिख्या द्रुततरमुदियायैवमुन्मत्तरूपा
विद्युद्दामाभिवोच्चैरपि च घनरसा वाससामुज्ज्वलश्रीः।
रेखाकारा च तासां वदनशशिकलाश्वेतधाम्नां हि धारा
पार्श्वे प्रज्ञापयन्ती† जनगणमभितः प्रादुरासीत्तदानीम्॥५५॥

याऽन्वीयं हस्तिसज्जा विलसितपथयोः पार्श्वयोर्वर्ण्यते का
गङ्गाक्षोभङ्गरूपेव च कलकलवत्यम्बुधारैकतुङ्गा।
सैन्यैर्मत्स्यप्रकारैरिव मकरवरैर्दीर्घकुम्भीररावै-
र्यौदोभिर्दोर्भिरेषां नगरवरनृणां दर्शनीयाविरासीत्‡॥५६॥

---

* तस्मिन् पथि पार्श्वे सैनिकनिवेशं शोभां कथयति (५४—५५)। "The route of the Procession was lined throughout by *troops*." "The lining of part of the route with native Regiments, particularly the Imperial Service Corps was most effective." "Flashing in the sun-light the white and blue of the Imperial Cadet Corps caught the fancy of the eager multitude."

† "प्रज्ञापयन्तीति सोपसर्गोऽपि मानुबन्धः। 'प्रज्ञापयामास सुखं निदाघ' इति किराते" (मनोरमा।)

‡ सर्व्वेषां हस्तिपृष्ठारोहणमुखस्य सम्प्रति साधारणभावेन नामैव वदन्तीं हस्तिसज्जां (Elephant-Procession and the State-Entry) दिल्लिप्रवेशक्रियाञ्च वर्णयति (५६-६१)। "They passed at an even rapid pace, so quickly that every spectator could feel a vague, dazzled impression of gold and silver in barbaric splendour and fantastic design." रव एव रावः, प्रज्ञादित्वादण्।

ते मातङ्गाः सरङ्गं भ्रमरचतङ्कतं झङ्कृतं गण्डपिण्डे,
कर्णैः पत्रैरिव द्राक् पथि भुवि मिलिता वारयन्तो विरेजुः ।
भास्वन्मुक्तामणीनां द्युतिभिरतितरां मण्डिताः शुण्डवन्तो-
मन्दं मन्दं तदानीं विरचितगतयः एष्ठगांस्तान् समूहः ॥५७॥
तस्मिन् कान्तिच्छटाभिर्नृनयनमुकुरे बिम्बिते हस्तिसङ्घैः
स्तब्धप्रायं चलद्भिर्हृदचलवरभ्रान्तिदैर्लोकनेत्रम् ।
भूषालीनाञ्च तद्वत्परिगतकिरणैरप्युदारैः सदारै-
र्झङ्कारैःपादचारैरवनिरवनता,कापि भा तत्स्थलानाम् *॥५८॥
किन्तु हस्तिप्रयाणं कुसुमिततरुभिः किञ्च वा गोचयानम् ?
रत्नं वा मलयदेशात् किमपि जलनिधेरूर्द्ध्वमुत्क्षिप्यमाणम् ?।
नानाकारैर्जनौघैः किमपि नरपतेर्वाद्यवत्सम्प्रयाणम् ?
किंवा विद्युद्विलासैर्जलधरगमनम्? पङ्गुवन्मेऽनुमानम् !†॥५९॥

---

* सदारैर्झङ्कारैः पादचारैश्च अवनिरवनता बभूव, तत्र भूषालीनां किरणैर्झङ्कारैश्च तत्स्थलानां कापि भा समुदितासीदित्यर्थः । "Two long rows of elephants with trappings of cloth of gold and *howdas* of seemingly solid silver and gold and carrying a perfect blaze of brilliant colour." "Every form of ornamentation has been lavished upon these beasts." "Their necks are encircled with silver jingling bells, their legs are swathed with thick silver bands and their trunks are painted with gay patterns of vermillion and blue and yellow."

† "The whole procession was, to the European spectator specially, a dream of glory, and a feast for the eye, a progression of beautiful and exciting surprises." गोचयानम्—पर्वतानां चलनं किम् ? गोत्रं नास्ति कुत्रेऽप्यादृग्विधि-मादरः । अनुमानं मे पङ्गुवत्—मायानुमानं मे प्रभवति ; केनापि उपमानानन्तरमेतदित्यर्थः ।

मुक्तादामायमानं नरपतिमुकुटं यत्र रत्नायमानं
शोभापुञ्जायमानं किमपि दशदिशां ऽभ्यागतं भासमानम् ! ।
शून्यं तारायमाणं किमपि भुवि गतं, तन्नृणां सम्प्रयाणं
राज्यान्तर्भूपतीनां किमिति सहचरैराजितं सन्निधानम् ॥६०॥

मार्गे मातङ्गसङ्घच्छुरितघनघटारंहसङ्घट्टनीले
तूर्णं हारिद्रमुक्तामणिशतरुचिभिर्लोहितायत्ययोच्चैः ।
लोकः सञ्चारमेतं मनुजपदचलद्रेणुदुग्धायमाने
मेने लौहित्यगङ्गाजलकलितमहायामुनाम्भः प्रवाहम्*॥६१॥

बह्वश्वा बहुमन्दिरो बहुगजो बह्वश्वयानादिको
बह्वार्यो बहुगोधनो बहुनरो बह्वन्नपानाशनः ।
बह्वैश्वर्यघटो बहुस्वजनभाक् बह्विन्द्रजालद्युतिः
बह्वक्षो बहुलाननो बहु बभौ मार्गे महाडम्बरः † ॥ ६२ ॥

---

* एतेन मार्गे समुदिता धवल-नील-लोहित-विविधवर्णानां मिश्रणोत्थशोभा वर्ण्यते। हारिद्रमुक्तामणिः—The Topaz, पद्मरागमणिरित्यर्थः। सञ्चारम्—The Procession. लौहित्यः—ब्रह्मपुत्रः ; लौहित्यनदस्य नामसाहश्यात्तस्मिन् लोहितवर्णारोपो द्रष्टव्यः ।

† या सर्वसमाप्तेः दिल्लीप्रवेशव्यापारदर्शनार्थिनां (spectators) समुच्चताजनतादिकं कीर्त्तयति। "There was an extraordinary gathering of the people in the streets, on balconies and on the roofs." "There was a continuous stream of conveyances of every imaginable pattern. The brilliant uniforms and smart dresses were strikingly incongruous with the quaint vehicles." बह्वक्षः—अक्षाणि इन्द्रियाणि (senses)। सर्वाण्येव समासबद्धपदानि "महाडम्बरः" इत्यस्य विशेषणानि ।

तुल्याकारमभीक्ष्य तत्र कमलभ्रान्त्या द्विरेफस्तदा
स्त्रीणामास्यसरोरुहे स्म चपलो मध्विच्छया भ्राम्यति ।
नावेदीत् स कटाक्षवत्सु वचनं, रात्रौ न तन्मुद्रितं,
मूर्खाणां गतिरीदृशी, मतिरपि प्रायो हि मन्दायते* ॥६३॥

सङ्कीर्णा पथि मनुजोष्ट्रयानवाहै-
रुद्यत्श्रीर्ध्वजपटवासतोरणैश्च ।
विक्षुब्धा चरणभरैश्च दिग्गिरुच्चै-
रुन्मत्ता नृपनगरीव तत्र रेजे † ॥ ६४ ॥

मत्तेभैः पथिषु चलाचलेन्द्रलीला-
मासाद्य स्फुरितकुथच्छटाघटाभिः ।
भूपानां वपुषि किरीटहीरहारै-
र्जातोच्चैर्द्युतिशतसङ्कुलेव दिग्भिः ॥ ६५ ॥

(युग्मकम् ।)

सत्शोभाढ्या नरपतियुता सा तदा हस्तिसज्जा
कीर्णं लोकैर्विपुलपुलकैर्मोरिगेटं विशन्ती ।

---

* "The roofs of the houses were filled with *women*, too eager to keep their faces veiled." स भ्रमरः, कटाक्षवत्सु वदनमपि तत्र अवेदीत्; रात्रौ एतन्नारीमुखपद्मं न मुद्रितं भवति, तदपि नासौ अवेदीत् इत्यर्थः। मन्दायते—भ्रमादिगतेऽस्य पाठः।

† ध्वजाः—Flags; पटवासाः—Tents; तोरणानि—Triumphal arches.

तुङ्गावर्त्तभ्रमणमुखरा वेगिता वाहिनीव
स्वं स्वं पश्चात् शिविरमुदगाद्भूरिकीर्त्तिं वहन्ती *॥ ६६ ॥

इति श्रीश्रीश्वरीये दिल्लिमहोत्सवे खण्डकाव्ये
दिल्लिप्रवेशो नाम प्रथमः सर्गः ।

* "On reaching the corner of Rajpur Road outside the *Morigate*, His Excellency and Their Royal Highnesses bade farewell to the Chiefs." &c. शिविरम्—Camp (पटवासभवनमित्यर्थः) । तुङ्गावर्त्तभ्रमणमुखरा—The official *route* has been arranged from the Ry. station, *viz.* Queen's Road, Elgin Road, to the Jumma Masjid ; then round by the eastern, southern, western and northern sides."





# द्वितीयः सर्गः।

आश्चर्य्याः पटमण्डपा विरचिताः कत्येव तस्मिन् सिताः

केऽप्यन्ये नीलरुचा तथा विलसिताः केऽपीन्दुशालान्विताः।

ते भूत्वा मशकारयः समुदितास्तद्वासभाजां नृणां

छायाच्छत्रमया इव द्युतिधरा रेजुर्यशोभास्वराः * ॥ १ ॥

यः शीतात्प्रबिभेति गात्रवसनं तस्यैव ते सातपं

वाताध्वानमदर्शयन्निजतनौ ग्रीष्मे कपाटादिभिः।

---

* दिल्लीनगरे संस्थापितानां पटनिर्म्मितवासभवनानां (Camps) वर्णना आरभ्यते। एतानि किल पटभवनानि दरबारे निमन्त्रितानां राज्ञां दर्शकादीनाञ्च दरबारदिवसवासार्थं रचितानि। आदौ त्रिभिः तान्येव सामान्यतः वर्णयति (१—३)। "The circuit of the Durbar Camps measures some 24 miles. This great area has been transformed into a sea of tents. As one stood upon the "*Historic Ridge,*" the eye sees literally nothing towards the *north-west,* but a bewildering multitude of tents shut in towards the horizon by a girdle of wooded hills." इन्दुशाला—An upper room on the housetop.

तद्दृक्षालयवासिनामपि नृणां हर्म्यं न रम्यं बभा-
वाश्चर्य्यां वरशिल्पिकीर्त्तिरचनामैक्षन्त दिल्ल्यां न के? ॥ २ ॥

येषामेव भयाद्दिनैकमपि वा नाभ्यागतं प्रावृषा,
शीतेनेव पुनर्नियुद्धमभवत् येषां कदाचित्तदा ।
का वार्त्ता तपनप्रतापविषये? दिल्ल्यां समान्दोलिता-
स्ते जित्वा नितरां बभुर्दशदिनं सर्व्वानृतूनोजसा ॥ ३ ॥
(विशेषकम् ।

आलिपुर-नामधर-सन्निकरसम्भवः
सर्व्वजनसिद्ध इह वृद्ध इव यो नवः ।
यस्तरुभिरुन्नतिभृदर्ककिरणाङ्कितो
रञ्जयति भूमितलमौघघटनान्वितः * ॥ ४ ॥
यः सरणिराज इह सर्व्वपदधारणं
सञ्चयति, यश्च कुरुते न विनिवारणम् ।
साधयति दीर्घवपुषा च मलधावनं
कारयति यश्च मरुतैव निजपावनम् † ॥ ५ ॥
(युग्मकम् ।)

---

* प्रथमतः पटभवनानां स्थाननिर्द्देशः प्रक्रियते । तत्रालिपुर-नामक-पथस्य (Alipur Road) वर्णना क्रियते द्वाभ्याम् (४—५) । सर्व्वजनसिद्धः—प्रसिद्ध इत्यर्थः । योऽयं पन्था वृद्धोऽपि पुरातनोऽपि नव इव नूतननिर्म्मित इव आसीदित्यर्थः । रञ्जयतीत्यत्र—सगरमणायाभावात् नलोपो न ।

† सरणिः—पन्थाः । सञ्चयति—लोकानां पदधारणं करोति, अमुनैव पथा लोकः गतायाते निर्व्वाहयतीत्यर्थः ; कल्पद्रुमकारः भ्वादावपीमं पठति । कारयतीत्यादि—"पन्था वातेन शुध्यती"ति स्मरणात् । मलधावनं साधयति—निर्म्मलोऽयं पन्था इत्यर्थः ।

काश्मीरद्वारदेशात् स च सरणिवरो दक्षिणादुत्तराशो
धावन् धावंश्च दूरे भुजग इव ततः कोणमेकं वितन्वन् ।
पुष्पाच्छन्नैर्द्रुमाद्यैरविरलविलसत्काकलीकैर्मनोज्ञः
सार्द्धैकक्रोशदूरे वरुणदिशमटन् ट्राङ्करोडं छिनत्ति * ॥६॥

वरुणदिशि च कोणतस्तदाली-
पुरमवलम्ब्य मनोज्ञमार्गमस्मात् ।
परिरचितानि हि सव्यतश्च वामे
पटभवनानि महान्ति तानि तानि † ॥ ७ ॥

तदध्वनः सन्निकटे प्रतीच्या-
मदूरभास्वद्यमुनाम्बुवीच्याम् ।
दौकूलिकं धाम बभूव तस्य
श्रीश्रीमतः सज्जनकार्ज्जनस्य ‡ ॥ ८ ॥

---

* अयं पूर्व्वश्लोकद्वयेनोक्त आलीपुर-रोडः (Alipur-road), काश्मीरद्वारादारभ्य, पश्चिमोत्तरदिशं कियद्गत्वा तत्र कोणमेकं वितन्वन्, तथाऽैव पश्चिममुखीभूय, सार्द्धैकक्रोशदूरे ट्राङ्करोडं (Grand Trunk Road) छिनत्ति । "The Alipur-road comes out of the Kashmir-gate and it crosses the Ridge about a mile and a half from its southern end. From this crossing point (कोणात्), it deflects due west and continues its westerly course until it meets the Grand Trunk Road *two miles* further *west*." सरणिः—पन्थाः । काकलीकैरित्यत्र नद्युतश्चेति बहुव्रीहौ कः ।

† तस्मात् कोणतः (*i.e.* the *point* where the Alipur-road crosses the Ridge) वरुणदिशि पूर्व्वोक्तमालीपुररोडमवलम्ब्य, तस्यैव मार्गस्य दक्षिणस्यामुत्तरस्याञ्च दिशि पटभवनानि निर्म्मितानि इत्यर्थः । "The Central Camp is divided into two by the Alipur-road." —*Guide to the Durbar*.

‡ अधुना श्रीमतः कार्ज्जनस्य पटभवनवर्णनं (Viceregal Camp) क्रियते (८—१७) । "About two miles out of Delhi and just beyond the 'Ridge' lies the Viceroy's

शोभासमुद्रस्य हृहत्तरङ्गे
पदे पदे दर्शितरत्नरङ्गे ।
तड़िन्निशिखिश्यामतिरञ्जिता श्रीः
प्रपश्यतां यत्र जड़ीकृता धीः * ॥ ९ ॥

(युग्मकम् ।)

शास्ता योऽद्य भुवो नृपप्रतिनिधिः प्रख्यातकीर्त्तिश्च यः
क्याम्पं तस्य महर्द्धिमद्विजयते स्वेन्द्रालयस्पर्द्धया ।
पश्चाद्यस्य विहङ्गरङ्गरुचिरैस्तुङ्गस्य शृङ्गादिभि-
श्छायाहृच्छतैः प्रसूनविततैरेको गिरिर्द्योतते † ॥ १० ॥

लम्बाकारमहाध्वपार्श्वयुगयोरभ्यन्तरे सुन्दरे
पुष्पाणां तरवो न चातिगुरवो राजन्ति येऽद्यापि च ।
पश्चात् प्रान्तरतः स्वतः समुदितालोका इवाभ्युत्थिता-
नानापत्रकदम्बपल्लवनवच्छायादिकायादयः ‡ ॥ ११ ॥

---

Camp." "Lord Curzon's Camp occupies the centre, on the *south* of the Alipur-road." तदध्वनः—आलीपुरमार्गस्य । दौकूलिकं धाम—पटभवनम् ।

* "The Viceroy's camp has been a marvel and wonder, a thing of beauty, carried out to the last detail of perfection."—*Englishman.* शिखी—अग्निः । श्रीः—आसीदिति शेषः । "अस्ति-भवति-परः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ती"ति भाष्यकारः । एवमन्यत्रापि द्रष्टव्यम् । यत्र—दौकूलिके धाम्नि ।

† गिरिः—*i. e.* The Flag-staff Hill. क्याम्पम्—Camp. यस्य पश्चात्—यस्य क्याम्पस्य (पटभवनस्य) पश्चात् इत्यर्थः ।

‡ "From the base of the Flag-staff Hill, a fifty-feet wide beautifully levelled *road* runs straight for three-quarters of a mile." "Either side of this road, is bordered by well-laid *lawns*, 100ft. wide, decked out with flower-beds and rare palms and tree-ferns in pots."—*The Guide.*

अत्याश्चर्य्यमतन्द्रचन्द्ररुचिराः श्रीभूषिता भूषिताः
तस्मिन् सार्द्धसहस्रमानमयिता दिव्याः पटीमण्डपाः।
शोभाढ्या बलिभिः क्रियाकुशलिभिर्ये पूजिताः शिल्पिभि-
र्लोकाह्वानकरा वराम्बरधरास्ते दीप्तताकादिभिः * ॥ १२ ॥

तत्रैकमेवं घृतभोज्यभाण्डं
रराज तुङ्गं भवनं प्रकाण्डम्।
ततोऽपरं दर्शनदानवेश्म
समागतानाञ्च विराजते स्म † ॥ १३ ॥

ध्वजस्य तत्प्रान्तरभूविभातः
पताकयोद्यत्प्रभया च जातः।
तड़िद्द्युतेस्तारतरश्च तार-
स्तस्मिन् दिदीपे घृतकार्य्यभारः ‡ ॥ १४ ॥

तद्वस्त्रावासवामे धवलितकवलैर्भोग्यदिंराजभट्टै-
रुच्चानन्दाट्टहास्यैर्बलिभिरुपचितो मूल्यवद्भूरिभाण्डः।

* "Behind these lawns, is the great avenue of *tents* on either side draped in white and gold, placed in one unbroken view." मानमयिताः—मानं परिमाणम् अयिताः प्राप्ताः, परिमिता इति यावत्। भूषिताः—भूष्याभुषिताः, प्रतिष्ठिताः। श्रिया लक्ष्म्या भूषिताः रञ्जिताः। सार्द्धसहस्रमित्यादि—"The Camp contains in itself 1450 tents."—*Ibid.*

† घृतभोज्यभाण्डं भवनम्—Refers to the "Dining-room," 130ft. by 40ft. समागतानां दर्शनदानवेश्म—Refers to the "Reception-room," 88ft. by 36ft.

‡ "In front of this, is a large level well-turfed *lawn*, on the centre of which the *Flag-staff* is placed, 46ft. high." तड़िद्द्युतेस्तारः—Electric wire (तार इति भाषाशब्दः)। तारतरः—दीर्घतरः।

किच्नार्-सेनाधिनाथप्रभृतिजनगणैः सुश्रिया भ्राजमान-

श्चिन्ने तत्रैव दिल्लीसरिदपरतटे वेश्महट्टो दिदीपे * ॥ १५ ॥

उपत्यकासन्नभुवीह रम्ये

कोणाच्च तस्मात् कियदेव याम्ये ।

उदन्तसङ्कीर्त्तनपाटवानां

बभुश्च सद्मान्यथ भारतानाम् † ॥ १६ ॥

इंराजिवार्त्तालिपिपण्डितानां

तथाऽन्यराज्यस्य च पालकानाम् ।

वस्त्रालयाश्चारुतराः, नृहंसा-

गायन्त्यथाद्यापि च यत्प्रशंसाः ‡ ॥ १७ ॥

तस्यैव पश्चात् कियदुत्तरञ्च

वङ्गाधिभर्त्तुर्भवनं ह्वि तत्र ।

---

* सम्प्रति कार्ज्जनीयपटभवनस्य दक्षिणस्यां दिशि संस्थापितानां पटभवनानां विवरणं ददाति (१५—१७)। तत्रादावनेन श्रीमत्किच्नारस्य सेनापतेः, प्रादेशिकसेनापतीनाञ्च पटभवनानि वर्ण्यन्ते। "The Viceregal camp was flanked on the *south* by the camps of Lord Kitchener and the Generals of four commands." दिल्लीत्यादि - दिल्ली नदीव ; तस्या अपरतटे, *i. e.* two miles *out* of Delhi-city. कवलः—मुखं, वदनम् (लक्षणया)।

† ताभ्यां वैदेशिकप्रतिनिधीनां सम्पादकानाञ्च पटभवनानि वर्ण्यन्ते (१६—१७)। "The Camps for the accomodation of Foreign consuls and Representatives and the Press Camps lie immediately to the *left* of the Viceroy's and the Commander-in-Chief's camps." तस्मात् कोणात्—*Vide* stanza 6 above. भारतानाम्—भारतवासिनाम् ; "जनपदे लुप्" इति तद्धितप्रत्ययस्य लोपः। उपत्यका—The Ridge. याम्ये—दक्षिणे।

‡ वस्त्रालयाः—पटभवनानि इति शेषः। नृहंसाः—नरश्रेष्ठाः, यत्प्रशंसाः येषां वस्त्रालयानां स्तुतिगीतीः अद्यापि गायन्ति।

तथाधिपानां नृपराज्यगानां
नानानना वस्त्रगृहा जनानाम् * ॥ १८ ॥
पञ्जाबमान्द्राजजनाधिपानां
द्युतिं वितन्वन् पटकेतनानाम् ।
आदर्शविम्बे प्रतिबिम्बितं सत्
दुकूलधाम व्यरुचच्च तत्तत् † ॥ १९ ॥
नानाप्रदेशाधिपशासकानाम्
अत्रैव सद्म स्थितमुन्नतानाम् ।
तड़िद्गृहं तल्लिपिदानधाम
चन्द्रोपमं यद्धृतशुभ्रधाम ‡ ॥ २० ॥
पूर्वोक्तकोणादिह चारुवेशे
कियच्च पूर्वोत्तरभूप्रदेशे ।

---

* अधुना काश्मीयक्याम्पस्य उत्तरस्यां दिशि संस्थापितानां पटभवनानां वर्णना क्रियते (१८—२१)। "All the camps of the Chief Provinces on the *north* side are in squares of nearly equal size." वङ्गाधिभर्तुः—Lieutenant-Governor of Bengal. नृपराज्यगानामधिपानाम्—*i. e.* The *Residents* (as those of Mysore, Baroda &c.), and *Agents* to the Governor-general.

† The first line refers to the Camps of the L. G. of the Punjab and the Governor of Madras. दुकूलधाम—पटभवनं, आतानवितानम् (धाम = गृहम्)।

‡ "On the north of the Viceroy's camp are the camps of the Lieutenant-Governors, Chief Commissioners, Residents &c. &c." तड़िद्गृहम्—Central Telegraph Office. लिपिदानधाम—Central Post Office. धृतशुभ्रधाम—धाम द्युतिरित्यर्थः। "धाम रश्मौ गृहे देहे स्थाने जन्म-प्रभावयोः" इति हैमः।

कृता पराचीनभटाधिपानां
गृहा नरेन्द्रात्मजसैनिकानाम् * ॥ २१ ॥
आलीपुराध्वोत्थितसन्निवेशे
किञ्चित् प्रतीच्युत्तरतः प्रदेशे ।
सेनाधिवासो रुचिरप्रकाशः
सेनागमस्तत्र शुभावकाशः † ॥ २२ ॥
अध्वैक एव भुवि कार्ज्जनसद्मजातः
सेनानिवासमधिगम्य ततो विभातः ।
तस्मादुदङ्मुखगतो वियदिन्द्रचाप-
च्छायाकृतिः कुसुमितः स सभामवाप ‡ ॥ २३ ॥
सभागृहं गन्तुमुपात्तवेशः
पश्चात्कृतालीपुरमार्ग एषः ।

---

* Now the poet specifies the camps of the *Imperial Cadet Corps* and the camps of the *Mutiny-veterans* lying on the east and north respectively of the angle mentioned in stanza 6 above.

† अथाधुना सैन्यानां शिविरभवनान्युल्लिखति । "Occupying the open space to the *north-west* of the Central Camp, on both the northern and southern sides of the Alipur-road, was placed the 'Military Camp' (Artillery, infantry, cavalry, sappers, miners &c. &c.)"

‡ अधुना द्वाभ्यां नवनिर्म्मितं दरबार-रोडं उल्लिखति ; दरबारमण्डपञ्च निर्द्दिशति । "The *Durbar-road* commencing from the Viceroy's Camp runs due north ; and passing through the Military Camp and crossing the Alipur-road goes straight on to the *Amphitheatre.*" इन्द्रचापः—इन्द्रधनुः, तस्य छाया शोभा । सभाम्—The Amphitheatre, कार्ज्जनसद्म—Viceregal Camp.

रराज नानाकुसुमैर्घितश्री-
निरीक्ष्य तं कस्य न विस्मिता धीः ?* ॥ २४ ॥
(युग्मकम्।)

निकृत्य चालीपुरवर्त्म यत्र
गतः स पन्था जगतः पदत्रः।
तस्यैव किञ्चित् किल दक्षिणस्याम्
आक्रीड़नस्थानमभूच्च तस्याम् † ॥ २५ ॥

राज्ञो घोषणमण्डपस्य रुचिराऽदूरे प्रतीचीमुखे
सैन्याभीक्षणभूमिरत्र रचिता चित्रा पताकादिभिः ‡।
तत्ट्राङ्काख्यपथस्य पश्चिमदिशि श्रीमद्ध्वजालङ्कृता-
भास्वन्तः पटमण्डपाः क्षितिभुजां नानानना निर्मिताः§॥२६॥

---

* एषः—*i. e.* The Durbar-road mentioned above. पश्चादित्यादि—*i. e.* This road after passing through the Military Camp, crosses the Alipur-road and *then* it goes to the Amphitheatre. कुसुमैर्घितश्रीः—"Gardens with flowering shrubs now line the roadway."

† अनेन आक्रीड़नस्थानं (Polo-ground) निर्दिश्यते। "Leaving behind the western boundary of the Central Camp, we come to the stretch of country divided in two by the Alipur road. To the *south* of this road is the Camp of Viceroy's escort. Between the camp of the Viceroy's escort and the Grand Trunk Road, the *Polo-ground* is situated."—*The Delhi Guide.* This ground is divided into 3 fields, each 300 × 200 yds.

‡ श्लोकार्द्धेन सैन्यदर्शनस्थलम् (Review-ground) निर्दिशति। "On the right of the Grand Trunk Road beyond where it is joined by the Alipur-road is the Review-ground."

§ अपरार्द्धेन भारतीयनृपाणां पटभवनानि वक्तुमुपक्रमते। "The Ruling Chiefs from different Provinces are housed at various points on the *western* road, running from the Lahore-gate, or the south-western road which connects

क्याम्पाख्यमन्दिरमभूद्धृतराजचिह्नं
वासान्निजामनगराधिपतेर्विभिन्नम् ।
राज्यानुरूपधनदानविनिर्म्मितं यत्
रत्नच्छटाखचितयानगजाश्वभास्वत् * ॥ २७ ॥

विद्युद्द्युतिस्फुरितदीपकदम्बशालं
मूल्याढ्यसंस्तरणवस्त्रशतैर्विशालम् ।
पानाशनोपकरणैश्च तथा रसालं
सेनानिवासगृहजातसितत्विषाऽऽलम् † ॥ २८ ॥
(युग्मकम् ।)

पीताम्बरद्युतिभिरुच्चपताकिकाभिः
पीताम्बरेण खचितामलमालिकाभिः ।

---

the Ajmir-gate with the Kutub." राज्ञो वीक्षणमण्डपस्य—*i. e.* The Amphitheatre mentioned in stanza 23 above.

* स्थानान्तरेऽस्मिन् कृत्वा सम्प्रति कतिपयपद्यानां प्राधान्येन पटभवनवर्णना आरभ्यते । तत्रादौ निजामाधिपतेः पटभवनं (Camp of His Highness the Nizam of Hyderabad) वर्ण्यते (२७—३०)। "The Nizam's temporary residence at Ludlow Castle was furnished in magnificient style." "The Nizam's *carriage* and escort of regal splendour was one of the sights of Delhi." "200 horses and 18 state elephants were taken from Hyderabad."—*The Empress, 1. 3. 1903.* वासात्—निवासार्थम् ; हेतौ पञ्चमी ।

† "The Camp was illuminated by acetylene light." "The private apartments contained the most costly carpets, hangings and shawls." "To the west, a large plot of ground was obtained for the purpose of a military camp to accomodate the Nizam's body-guard." दीपकदम्बशाला—दीपमालानां भवनानि । आलम्—भूषितम् ।

आमन्त्रिता रुरुचिरे जनताश्च यस्मिन्
सौवर्णराजतघटामभिवीक्ष्य तस्मिन् * ॥ २९ ॥

मुक्तामाणिक्यभास्वद्द्युतिरतिजटिलो हीरहारैरुदारै-
र्हैम्ना भ्राजिष्णुदाम्ना निगडित इव यत्कञ्चुको धामचुञ्चुः ।
नानारत्नच्छटाभिः प्रतिफलितरुचोपानहा चारुकान्त्या
रेजे तस्मिन्निजामो जवनजनपतिः सत्स्वभावो नबाबः † ॥ ३० ॥

दूराच्च यन्निशि नभःपरिणीततारं
दीपत्विषैव भुवि खेलितरत्नसारम् ।
लोकायमानमसकृच्च विलोकनेन
शोभाश्रितेन च पुनः पृथुमञ्जुलेन ‡ ॥ ३१ ॥

एतद्गृहं परममुच्चतराघ्यभाण्डम्
अद्यापि यच्च वरदाधिपतेः प्रकाण्डम् ।
भूमिस्थलादुदितमिन्द्रपुरञ्च किन्तत्
नृणाञ्च दर्शनपथे पतितं नु शश्वत् ? ॥ ३२ ॥

(युग्मकम् ।)

---

* "The grounds of the Castle were gaily decorated yellow, the Royal colour at Hyderabad predominating." "There was also a magnificient display of gold plate."

† यस्य कञ्चुकः (armour) हैम्ना निगडित इव रेजे ; स्वयञ्च धाम्ना तेजसा चुञ्चुः, "तेन वित्तश्चुञ्चुपचणपौ" । मुक्ता—Pearl ; माणिक्यम्—Ruby ; हीरम्—Diamond ; हेम—Gold ; रत्नम्—Gem. नबाब इति—यवनसमाजः साधारणसंज्ञा ।

‡ वरदाधिपस्य पटवासभवनं (Camp of H. H. The Maharaja Gaekwar of Baroda) वर्ण्यते (३१–३८) । "The most gorgeous of all the camps was that of Baroda ;

कामानबाणमपि हेमतनुं दधानम्
एकं, परन्तु रजतेन च दृश्यमानम् ।
गावो दधुः कनकशृङ्गविराजमाना
रत्नावलीद्युतिशतैः कृतसन्निधानाः * ॥ ३३ ॥

गवाञ्च चरणं रणत् कनकचारुमञ्जीरत-
स्तदूर्ध्वमपि चोल्लसत् शकटगामिकामानतः ।
वृषाश्च शकटावहा विविधभूषया भूषिता
वृहद्बलभृतः पुनः कतिपये च तेऽस्मिन् सिताः † ॥ ३४ ॥

कण्ठे मुक्तामणिस्रक्, नवकुसुमकलावङ्गुरीयं विचित्रं,
नानारत्नद्युतीनां ततिभिरुपचितः कञ्चुकश्चापि गात्रे ।

---

an elegant bungalow of transcendental beauty was built at Baroda, the panels of which were richly carved. Its framework was gathered together and carried to Dehli. The whole was surmounted by a huge dome, 50ft. high, fron. which projected a gilt spire carrying 2000 candle-power *arc-lamps.* Over the central arch, in letters of gold in white ground, was inscribed 'Long live the King-Emperor'." लेलिह रत्नसारम्—"The most striking feature of the Gaekwar's Camp was the magnificient display of jewels." लोकायमानम्—लोकवत्शब्दात् "तत्करोतीति" णिचि मतुब्लोपे रूपम् । लोकविशिष्टमिव लोकपूर्णमिवेति यावत् । पृथमकुसुमेन—एकस्य विशेष्यत्वकल्पनया समासः ।

* "H. H. brought with him his celebrated *golden gun* 5ft. long with $2\frac{1}{2}$ bore, drawn by bullocks." The other gun was of *silver* upon a gilded carriage. "The oxen had heavy gold anklets on their legs, with their harness of beaten gold." कामानबाणम्—कामानास्त्रमित्यर्थः, बाणमिति लक्षणया अस्त्रम् ।

† कनकमञ्जीरैण गवां चरणं रणत् शब्दायमानमासीदिति शेषः । तदूर्ध्वं चरणानामूर्ध्वदेशः, गवां गात्रोर्ध्वभाग इति यावत्, कामानतः कामानेन (*i.e.* by the guns) उल्लसत् विराजमानमासीत् इति शेषः ।

उष्णीषे चापि विद्युत्किरणनिभविभा हीरकोत्कृष्टशोभा,
भ्राजिष्णुर्विद्रुमाख्यद्रुम इव वरदाराज्यराजोऽत्र रेजे * ॥ ३५ ॥

राज्ञी च राज्ञोऽस्य बभौ निशान्ते
हिन्दोरलङ्कारशतेन कान्ते ।
सिन्दूरबिन्दोररुणस्य भात्या
प्रजावती सा किल दाक्षिणात्या † ॥ ३६ ॥

स्फुरत्प्रभाभिः परिचारिकाभि-
र्निषेविता कङ्कतिकेक्षिताभिः ‡ ।
विराजमानेव महेन्द्रलक्ष्मीः
स्वयं नरेन्द्रेण च या व्यलक्षि ॥ ३७ ॥

जातीयसिंहासनमङ्कस्था
स्फुरत्किरीटाङ्कितचारुमस्ता ।

---

* H. H. wore a breast-plate of diamond worth nearly a quarter of a million sterling, and the private apartments were ablaze with jewels. The pearl necklace was valued at 36 lacs of rupees and considered one of the finest in the world. विद्रुमाख्यद्रुमः—A tree bearing precious jewels.

† "A special group of tents was arranged for Her Highness the Maharani and her ladies." हिन्दोरिति भाषा, *i.e.* of the Hindus. दाक्षिणात्या—दाक्षिणात्यप्रदेशोद्भवा । प्रजावती—पुत्रादिमती । निशान्ते—गृहे । "निशान्तवस्त्यसदनं भवनागारमन्दिरम् ।"

‡ कङ्कतिकेत्यादि—"The Maharani's gold mirrors, gold *hair-brushes,* gold hand-glasses, studded with gems, added to the splendour of the apartments." महेन्द्रलक्ष्मीः—पक्षे शचीव विराजमाना ।

गेहेऽत्र रक्तांशुकशोभमाने
जलस्य यन्त्रेण च दृश्यमाने * ॥ ३८ ॥
(विशेषकम् ।)

अयःप्रभालङ्कृतमञ्चमस्तः
पटालयोऽर्हाभरणैः प्रशस्तः ।
महान्महीशूरपतेर्यशस्यः
शतश्रियासीद्भुवि पश्यपश्य † ॥ ३९ ॥
मुक्तावलीभिर्मणिरत्नमालां
दोलायमानां द्विरदे विशालाम् ।
अतैलपूरद्युतिदीपनीप-
मुवाह योऽन्तःस्थिततन्महीपः ‡ ॥ ४० ॥
(युग्मकम् ।)

---

* जातीयसिंहासनेत्यादि—"The historic golden chairs were brought from Baroda for the use of Her Highness." मस्तं—मस्तकम् । रक्तांशुकेत्यादि—"The Maharani's quarters were draped with pink silk, and the carpets were magnificent." जलयन्त्रम्—"In the centre of the main lawn was a large *fountain* illuminated by electric lights of ever-changing colour."

† महीशूरपतेः पटभवनं (Camp of H. H. The Maharaja of Mysore) वर्ण्यते (३९—४१) । "Near to the Baroda-camp was that of the young ruler of Mysore, which contained *steel* and plaster residences for the Maharaja and the Dewan." मञ्चमस्तम्—मञ्चस्य मस्तम् ऊर्ध्वभागः, steel residence. पश्यपश्येत्यव्ययशब्दः, "पश्यपश्य तथाश्चर्ये" इति कोषः । यशस्यः—'यशस्'शब्दस्य स्वर्गादिगणे पाठोऽस्ति ।

‡ "Mysore had long been famous for its *elephants* and the one H. H. rode at the State-Entry was a truly regal animal." अतैलपूरद्युतिदीपनीपं—*i.e.* विद्युद्दीपः ; नीपः—कदम्बः, समूह इति यावत् । यः—पूर्वश्लोकोक्तः पटालयः ।

सुश्रीमत्काञ्चुके सत्कुसुमकलिकुलोत्फुल्लभाभ्राजमाने
गात्रे तत्रोत्तमानां द्विगुणतररुचां वाससामुज्ज्वलश्रीः ।
नानालङ्कारहारानुगमुकुटमणेर्भाभिरुत्कृष्टशोभ-
स्तस्मिन्नुच्चप्रभावो मणिभिरथ महीशूरराजो रराज * ॥४१॥

योऽसौ हिन्दोरिवेन्दोः कुलमतिविमलं जन्मनैव प्रकुर्व्वन्
योग्यैर्विज्ञैरमात्यैरपि नृपविषयज्ञानविद्वद्वरिष्ठैः ।
राज्यं पश्चात् सुशान्तेरभिनयविधिना जातिराजोऽवतीह
प्रायस्तुष्टः प्रजाद्भिः क्षितिपतिचरितं गायतीति प्रवादः † ॥४२॥

राज्याख्ये बहुमूर्त्तिभिः सह फटोग्राफ्-दर्पणे विम्बिता
यस्यैका वचनान्विता नृपहिते श्रीकृष्णमूर्त्तिः शुभा ।
तेनाद्य द्रविणचुटेरथ महीशूरो हि दूरोषितः
श्रीरुक्मिण्यपि सुन्दरी हलधरादेः प्रक्रियाऽप्यद्भुता ‡ ॥ ४३ ॥

---

* "The Maharaja wore a dress of gold brocade with magnificient diamonds, sprigs of pearls and a pendant of rubies." गात्रे वाससामुज्ज्वलश्रीरासीद्-यस्येति शेषः ।

† महीशूरराजमेव वर्णयति । हिन्दोः कुलम्—Hindu Prince. सुशान्तेरभिनयविधिना—राज्ये सदाविराजमानशान्तिसम्पदेत्यर्थः । अवति—पालयति ।

‡ अनेन महीशूरनृपतेर्मन्त्रिणं श्रीकृष्णमूर्त्तिनामधेयं (Sir P. N. Krishnamurti K. C. I. E.) वर्णयति रूपकेण ; राज्यस्य समृद्ध्यादिकमपि उद्घोषयति । फटोग्राफ् दर्पणे (Photographic-plate) यथा नानाविधा मूर्त्तयः प्रतिविम्बिता भवन्ति,तथा महीशूरराज्ये बहुमूर्त्तिभिर्विविधामात्यवर्गैः सह एकः कृष्णमूर्त्तिनामकः नृपहिते रतः मन्त्री अस्तीति शेषः । फटोग्राफ्-दर्पणस्थ-मूर्त्तयः निर्व्वचना भवन्ति ; इयन्तु मूर्त्तिः कृष्णाख्या सवचना । किञ्च, श्रीकृष्णे वर्त्तमाने सति, बलरामरुक्मिण्यादीनामपि समागमः पूर्व्वमासीत् इति भारती कथा प्रसिद्धा ; अत्रापि महीशूर-राज्ये रुक्मिणी श्रीः काञ्चनरत्नादीनां लक्ष्मीरस्ति, समृद्धिमान् जनपदोऽयमित्यर्थः ; तथास्मिन् हल-धरादेरपि प्रक्रिया कृषिकार्य्योन्नतिरित्यर्थः, सापि अस्ति । इति शेषः ।

अत्रैव काश्मीरपतेश्च चारु
महार्घवस्त्रास्तरणं सुकारु ।
रौप्यीयदण्डेषु निविष्टदेहं
सुवर्णडिम्बाञ्चिततुङ्गगेहम् * ॥ ४४ ॥

गृहे गृहे चेलचयाः प्रशस्ता-
लसत्-सुविद्युद्वरकारुहस्ताः ।
तडित्त्विषालोकनदानवत्या
चतुःशतं गेहमदीपि सत्या † ॥ ४५ ॥

विरचितपदं शुण्डादण्डे प्रवालमणिद्रवै-
र्ललितरचनारागः पादे कृतः खलु धातुभिः ।
द्युतिशतवता प्रालम्बेन प्रवेष्टितकन्धरो
विपुलवपुषा दृष्टश्चैकस्तथात्र महागजः ‡ ॥ ४६ ॥

---

* काश्मीराधिपतेः पटभवनं (Camp of H. H. The Maharaja of Kashmir) वर्ण्यते (४४—४७)। "The beautifully draped tent-roofs were supported by 80 solid silver poles each surmounted with a gold ball." तुङ्गगेहम्—चाद्रीदिति शेषः। आस्तरणम्—Carpet.

† "Durbar-halls were draped with the choicest Kashmir fabrics and Carpets. A large modern installation of electric light was established, giving a total illuminating power of 120,000 candles." "The Camp contained 400 tents." आलोकदानवत्या तडित्त्विषा विद्युद्दीपेन अदीपि। चेलचयाः—Carpets and rugs.

‡ "State-elephants have arrived including the celebrated Jamna Pershad whose ears, head and trunk had been tattooed in gold, blue and crimson designs, and whose tusks carried heavy golden ornaments." प्रालम्बेन—गलविलम्बिन्या मालया। वपुषेति उपलक्षणे तृतीया। अत्र—काश्मीरपतेर्भवने।

चञ्चच्चूड़ाकिरीटः शतरुचिरुचिरः हीरकाकारकीरः
कण्ठे जाम्बूनदाख्याभरणसुकिरणस्रक् तथैकाप्युदारा।
गन्धैर्नीरन्ध्रसंसत्पदमिव रचयन् कुङ्कुमाख्यैः प्रसूनैः
राजन् राजा विरेजेऽनुजसुतसहितस्तत्र काश्मीरराज्यात्*॥४७

गृहञ्च कर्पूरतलाधिभर्त्तु-
र्माहात्म्यवत् यद्भुवि शिल्पकर्त्तुः।
करीन्द्रमेकं विदधत्प्रधानं
सर्व्वाङ्गशोभापरिदृश्यमानम्† ॥ ४८ ॥

एकादशाब्दञ्च जयन्तरूप-
मादाय भाति स्म सुतं स भूपः।
समुद्रपाराच्च तथाऽत्र यानं
शोभाङ्कितं सत्तुरगायमानम्‡ ॥ ४९ ॥

---

* "H. H. and his brother appeared in splendid, yet simple costumes, with the beautiful plume waving from their turbans." कीरः—पक्षी, विहगाकारहीरालङ्करणमिति भावः। जाम्बूनदम्—Gold ; कुङ्कुमम्—Saffron. अनुजसुतसहितः—"The jewellery of the son of Raja Amar Singh included a superb necklace of pearls."

† सम्प्रति पञ्जाबप्रदेशभूपतीनां (the Punjab chiefs) पटवासभवनवर्णनां कर्त्तुमुपक्रमते (४८—५१)। "Between the Grand Trunk Road and the Canal are placed the Camps of the Madras, Kashmir and the *Punjab chiefs.*" तत्रादौ कर्पूरतलाधिपस्य पटभवनं (Camp of H. H. The Maharaja of Kapurthala) वर्ण्यते (४८—५०)। "The Raja of Kapurthala brought an elephant with a howda specially made for the Durbar."—*Bengalee.* गृहम्—आसीदिति शेषः।

‡ "His Highness and his eleven years old son wore magnificient costumes ; the former had a magnificient tiara of costly gems." स भूपः जयन्ततुल्यम्

शुक्लैश्च नीलैर्वसनैर्विभातैः
सञ्चालितं सर्व्वजनाक्षिपातैः ।
दोधूयमानं नयनाभिरामं
चलत्यताकञ्च विना विरामम् * ॥ ५० ॥
(युग्मकम् ।)

मौलावुष्णीषमेकं शतरुचिरुचिरं कङ्कपत्रप्रभाढ्यं
वक्षो हारेण दाम्ना दधदपि घटिकायन्त्रमेकं स्वतन्त्रम् ।
सर्व्वाङ्गे स्वर्णपत्रद्रुमकुसुमलसत्कञ्चुकं चोपरीतं
बिभ्रद्राजाऽत्र रेजे सदसि नववयाः पातियालाधिपोऽपि † ॥ ५१ ॥
क्वाप्यं किञ्चिच्च गोलं नवनवमरुता यस्य लोलं निचोलं
भूरिद्रव्याढ्यमुच्चैः सति दिवसकरे कोष्णमन्यत्र शीतम् ।
दृष्टाविन्दीवराभं ध्वजपटसहितं रत्नाभं सुभातं
तुङ्गच्छत्रायमाणं गृहमणिविलसत्स्वर्णवर्णञ्च रावौ ‡ ॥ ५२ ॥
(युग्मकम् ।)

---

एकादशाब्दवयस्कं सुतं तत्रादाय, समुद्रपारात् यानञ्चादाय भाति स्म इत्यन्वयरीतिः । जयन्तेत्यादि कथनेन भूपस्य इन्द्ररूपता ध्वन्यते ।

* पूर्व्वश्लोकार्द्धचरणेन कथितं यानमेव वर्णयत्यनेन । "He rode in a coach imported from *Europe* for the occasion escorted by a fine body of men in smart *blue* and *white* uniforms."—*Ibid.*

† द्वाभ्यां पातियालाधिपस्य पटभवनं (Camp of H. H. The Maharaja of Patiala) वर्ण्यते (५१—५२) । कङ्कपत्रं—कङ्क-(heron)-पत्रः । घटिकायन्त्रम्—Watch.

‡ "It was the most profusely furnished camp and beautifully illuminated with lamps within फानुसाभ्यां *i.e.* small talc-made covers." गृहमणिः—प्रदीपः ।

भावोलपुराधिपतिनिर्म्मितवस्त्रवासो
विद्युत्प्रदीपकुसुमाकृतिमत्प्रकाशः ।
रोषन्चकीत्यभिहितैरिह वाद्यभाण्डै-
र्वादित्रवान् मधुरशब्दधरैः प्रकाण्डैः * ॥ ५३ ॥

अथ द्विखण्डीकृतहंसडिम्ब-
वृत्तार्द्धवद्दृश्यनितम्बविम्बः ।
वस्त्रालयो वाष्पजदीपभातः
प्रपश्यतां नेत्रपथं प्रयातः † ॥ ५४ ॥

तस्मिन् निवासे सति सिन्धियेन्द्रे
महाघटा-चारुचयाञ्च केन्द्रे ।
साष्टैकसंख्यद्विरदायमाने
कान्त्येकता का भुवि, तां न जाने ‡ ॥ ५५ ॥

---

* भावोलपुरपतेः पटभवनं (Camp of H. H. The Maharaja of Bhawalpur) वर्ण्यते अनेन। "That big gate next to Kashmir was Bhawalpuri's with one of the best रोसन्चौकी for *music.*" विद्युत्प्रदीपकुसुमाकृतीत्यादि—कुसुमाकारेण रञ्जितविद्युद्दीपेन शोभितः (fancy electric lights) इत्यर्थः । वस्त्रवासः—अत्र आसीदिति शेषः ।

† मध्यभारतप्रदेशीय-(Central India Camps)-नृपतीनां पटभवनवर्णनामुपक्रमते ; तत्रादौ सिन्धियाराजस्य पटवासभवनं (Camp of H. H. The Maharaja Scindhia of Gwalior) वर्ण्यते (५४—५५) । "The camp is laid out in a semicircle and is lighted by gas."

‡ "Among the most popular princes here is Scindhia. No less than 18 elephants were brought. H. H.'s costumes have been much admired." तस्मिन्निवासे सिन्धियापतौ वसति सति, कान्त्येकता द्युतीनामेकत्रसम्मिलनच्छटा भुवि का इति न जाने । इह या तेजसाम् एकत्रसम्मिलनशोभा समुदियाय, तस्याः सादृश्यं कुत्रापि नास्तीति शेषः इति भावः । महती घटा=महाघटा ; "करिणां घटना घटा" इत्यमरः ।

अत्रैव मध्यभुवि भारतमण्डलस्य
वस्त्रालया बहुविधाः सकलोत्तमस्य ।
भूपालभूपतिपतेरथ दातियाया
इन्दोरकादिनृपतेः प्रबभुश्च कायाः* ॥ ५६ ॥

तत्पूर्व्वतो जयपुराधिपतेश्च कान्तं
यदृश्यते स्म धृतघोटकराजिभम्यम् ।
चिक्रीड़ चात्र भुवि सार्द्धशताश्ववाह-
सम्यक्प्रवाहसहितो दृढदुष्टवाहः† ॥ ५७ ॥

पटालयेऽस्मिन् द्विरदाश्च पञ्च
आजिव्यूरेकोऽधिपतेश्च मञ्चः ।

---

* "The Central India chiefs are a long way from the centre of things, four miles to the west of the city." "The Central India states, of which there were eleven representatives, made altogether the most wonderful show of the lot." भूपालभूपतिपतेः —भूपालराज्यस्य यो भूपतिः स एव पतिर्भर्त्ता यस्यास्तस्याः, भूपालबेगमस्येत्यर्थः । दातिया – Datia ; इन्दोर – *i.e.* The Holkar of Indore. अत्रैव भारतस्य मध्यभुवि (स्थिताः ये इन्दोराद्याधिपतयः, तेषां) वस्त्रालया आसन् इति अन्वयरीतिः श्लोकस्य ।

† अधुना राजपुतानाप्रदेशीय-(Rajputana chiefs)-नृपतीनां पटभवनवर्णनामुपक्रमते (५७—६४) ; तत्रादौ जयपुराधिपस्य पटभवनं (Camp of H. H. The Maharaja of Jeypur) वर्ण्यते (५७—५८) । "The Rajputana Chiefs are placed about half way between the Central India groups and the city." "Although unmarked by any great display of wealth, the camps of the Rajput chiefs were well worthy of notice." सार्द्धशताश्ववाहेत्यादि – "The animals including 5 elephants (see next stanza) and 150 horses and camels marched *all* the way from Jeypur." तत्पूर्व्वतः—*i. e.* मध्यभारतीयनृपभवनानां पूर्व्वस्यां दिशि ।

लौहस्य दण्डे इतिजातशोभा
प्रवर्त्तिताऽभून्नयनप्रलोभा * ॥ ५८ ॥
हयस्तथा सार्द्धशतः, सहस्रं
सैन्यं, सहस्रञ्च नृणामजस्रम् ।
स्फुटप्रभं पञ्चशतञ्च यानं
व्यलोकि लोकैरिह लभ्यमानम् † ॥ ५९ ॥
उदयपुरनृपश्रीस्तत्र वेश्मप्रकारा
रुचिभिरिव रुचां या चोद्बभौ दुर्निवारा ।
बहुनरबहुवाहा नागपुन्नागयोगै-
रपि सकलवरेयं खाद्यतो योच्चभोगैः‡ ॥ ६० ॥
उद्यानशोभारचिताग्रभागं
गृहं विकानीरपतेः सरागम् ।

---

* "The Cánáts, which surrounded the camp, were supported by iron-rails."

† "The Jeypur corps of 1000 and 500 carts took a prominent part in the Delhi-manœuvres. The retainers of the Maharaja number 1,197." नृणाम्—*i. e.* of the retainers. अजस्रम्—क्रियाविशेषणमेतत् ।

‡ अनेन उदयपुराधिपतेः पटभवनं (Camp of H. H. The Maharana of Udaipur) वर्ण्यते । "The charming Udaipur Camp was laid out under the personal direction of the Maharana. Two special trains brought the 1000 retainers to Delhi, and the magnificient elephants came by road." नागाः—करिणः । पुन्नागः—वृक्षः (Rottleria tinctoria).

पुराब्धिवक्षःस्थितपोतजात-
मालम्ब्य यो लण्डभुवं प्रयातः* ॥ ६१ ॥
गृहं सुतुङ्गं रुचिरं शतद्वयं
मणिप्रभोद्भासितसज्जनाश्रयम् ।
गजाश्च पञ्च प्रथितप्रतिष्ठा
वाष्पप्रदीपद्युतयोऽपि दृष्टाः† ॥ ६२ ॥
द्वारेऽस्य तस्येन्द्रधनुःप्रकारा
कापि प्रभा चारुतराऽभ्युदारा ।
राजा महेन्द्रो गृहमध्यवर्त्ती,
गृहं किमस्य स्म धनुर्बिभर्त्ति ?‡ ॥ ६३ ॥
(विशेषकम् ।)

राजेव सर्व्वपटमण्डपमण्डलस्य
तत्रालयारनृपवंशसमुद्भवस्य ।

---

* त्रिभिः विकानीरपतेः पटभवनं (Camp of H. H. The Maharaja of Bikanir) वर्ण्यते (६१—६३)। गृहम्—आसीत्, अथवा दृष्टमित्यनेन सहान्वयः। A beautifully laid-out *garden* adorned the front of this camp.

† "A handsome arch marked the entrance to the Bikanir Camp of 200 tents. 5 elephants accompanied the Maharaja and a collection of jewels dazzled the eyes of those privileged to see it." वाष्पप्रदीपद्युतिः—Gaslight. मणिप्रभेत्यादौ बहुव्रीहिसमासः द्रष्टव्यः, तत्पुरुषे पुंलिङ्गतापत्तेः। "गृह"मित्यत्र विभक्तिविपरिणामेन "दृष्टा" इत्यनेनान्वयः।

‡ इन्द्रधनुःप्रकारा प्रभा—Refers to the beautiful *arch* leading to the entrance. विकानीरपतेरिन्द्रेण सह साम्यं नाटयत्यनेन। अस्य धनुः—महेन्द्रस्य धनुः, इन्द्रधनुरिति यावत्।

उष्ट्रप्रवाहिकटकैरभिवीक्ष्यमाणं
तुङ्गं गृहं समभवत् विधृतोष्ट्रयानम् * ॥ ६४ ॥

बम्बाख्यातमहीभुजां यमनदिग्भागे कियद्दूरतो
बाणाइन्दुमितञ्च वस्त्रभवनं तत्रैकतोऽभूत् स्थितम् ।
सैन्यानाञ्च सहस्रमुन्नततरं यानानि तावद्गजा-
विद्युद्दाममरीचिदीपगहनैर्जाज्वल्यमानञ्च यत् † ॥ ६५ ॥
आसीदत्र पुनश्च मूकशकटं वाहान्वितं यन्न तत्
हट्टश्चापि नृणाञ्च गोपुरपुरोभागे सशब्दो बृहत् ।
यस्मिन्नीदर-मीर-भूपसहिताः कोलापुराद्याधिपा-
स्तस्थुर्दिग्दिवसं कुतूहलभृतः संव्याप्य तैस्तैर्जनैः ‡ ॥६६॥
(युग्मकम् ।)

---

* अनेन आलयारनृपतेः पटवासभवनं वर्ण्यते (Camp of H. H. The Maharaja of Ulwar). Ulwar was almost the best of the R·jputana Camps. The peculiar feature was the camel corps guards and team of camels of the Maharaja's unique carriage.

† अधुना बोम्बाइप्रदेशीय-नृपतीनां (Bombay Chiefs) पटभवनवर्णनामुपक्रमते (६५—६६) । "The Bombay Chiefs are to the south of the city, about 10 miles from the Amphitheatre." "The Bombay Provincial Camp consisted of 25 separate and distinct camps. Upwards of 1000 horses, carriages, an assortment of elephants and many motor-cars presented some of the features of interest. Electric light stations were established and a large native bazzar." बाणइन्दुमितम्—पञ्चविंशतिमितम् ।

‡ मूकशकटम्—Motor car. हट्टः—Native bazzar. ईदर-मीर-भूपसहिताः—The Maharaja Sir Pertab Singh of *Idar*, A.-D.-C. to the King-Emperor ; and H. H. The *Mir* of Khairpore. कोलापुराधिपः—H. H. The Maharaja of *Kolhapore*. यत्र—पटभवनस्थली इत्यर्थः । दिग्दिवसं—दशदिनं व्याप्येत्यर्थः ।

कच्छेन्द्रस्याच रेजे पटभवनमथाद्यापि चिह्नायमानं
यत्तत् षट्कैः शतैस्तैरपि नरनिकरैर्दृश्यमानं सुमानम् ।
नानामुक्तामणीनां द्युतिभिरपि लसत्केतनाडम्बरैस्तै-
र्दूराद्दृश्यं सुनीलं नभ इव महसा भास्वदच्छं सुकच्छम् * ॥६७॥

भवनगरनरेन्द्रस्याप्यभूद्वस्त्रवासो
ललितकिरणजालैः स्वश्रिया चन्द्रहासः ।
ध्वजपटतरुणाभे यत्र तैस्तैः सुनाभे
नरनयनसहस्रं बद्धमासीदजस्रम् † ॥ ६८ ॥

प्राचीनवीरैरथ धारितं यत्
तदेव शस्त्रादि विगृह्य भास्वन् ।
विलोकितं सैन्यमभून्महत्या
नृपाज्ञया यत्र सुचारुगत्या‡ ॥ ६९ ॥

(युग्मकम् ।)

---

* अनेन कच्छाधिपस्य पटमण्डपः (Camp of H. H. The Rao of Cutch) वर्ण्यते । "The Rao of Cutch with his 600 retainers is located in an attractive camp. The collection of jewels is very fine and the tent is of *velvet* of great expense." कच्छः—नवनम् ।

† द्वाभ्यां भवनगराधिपतेः पटवासभवनं (Camp of H. H. The Thakur Sahib of Bhavnagar) वर्ण्यते (६८—६९) । "One of the most interesting of the camps was that of the Maharaja of Bhavnagar. A central drive led to a reception *Shamiana*, the entrance to which was by an elegant archway, decorated with flags &c. The tents were lighted by electricity and the main road by Kitson light." ध्वजपटतरुणाभे—ध्वजेषु दत्तैः पटैः पताकादिभिः तरुणाभे तरुणा आभा यस्य तस्मिन् । तैस्तैर्वस्तुविशेषैः सुनाभे—*i. e.* वस्त्रभवनस्य नाभिस्थाने (मध्यभागे इति यावत्) तानि तानि प्रसिद्धानि द्रव्याण्यासन्नित्यर्थः ।

‡ H. H. had with him an escort of 40 troops, which, by the Viceroy's

ब्रह्मप्रदेशधनिनामपि चागतानां
हेमस्त्रजा खचितसर्व्वपरिच्छदानाम् ।
कापि प्रभा समुदिता मुदितात्मनां प्राक्
तस्मिन्, यदीक्षणविधावटनं नृणां द्राक् * ॥ ७० ॥

अङ्के सहेममुकुटोज्ज्वलदुत्तमाङ्के
सन्न्यासिबौद्धवदलङ्कृतिभातरङ्के ।
क्याम्पं प्रपक्षुरुरुचारुनिजश्रियाऽलं
नक्तं लसत्कदलिकावनदीपमालम् † ॥ ७१ ॥
(युग्मकम् ।)

ब्रह्मान्तर्गतसान-साह्वयभुवान्तश्चैव राजोत्सवे
धन्येको जनदृष्टितामुपगतः क्याम्पे स्वकीये नवे ।
मुद्राणां क्रयविक्रयस्य च पुनर्भूपस्य राज्यस्य वा
मूलानां, वसनैश्च शोभितकटिर्भारं मनुष्येऽर्पयन् ‡ ॥ ७२ ॥

---

special request, were dressed in *ancient* armour and armed with weapons of a by-gone age." नृपाज्ञया—श्रीकार्ज्जनादेशेन । सुनामि—समासान्ताच्,पा.५।४।७५।

* अधुना ब्रह्मप्रदेशीय-धनिनां पटभवनानि (Burma Camps) वर्ण्यन्ते (७० - ७४) । "The Durbar was attended by the following Shan chiefs from Burma :—The Myoza of Gantarawadi, the Myoza of Hsa Mong Hkam, the Sawbwa of Hsenwi, the Sawbwa of Keng Tung &c. &c." "The most picturesque figures in the Durbar Camp are the men from the Shan states. To reach Delhi, they started in November and rode 500 miles to the rail road."

† "The strange head-dress of gold, and the ropes with gold wings after the fashion of *Buddhist saints* are very curious."—*Bengalee.* उत्तमाङ्गं—मस्तकम् । प्रपक्षुः—ब्रह्मप्रदेशधनिन इति शेषः । अङ्के इत्यत्र भावलक्षणा सप्तमी ।

‡ *Vide* notes on stanza 70 above. सान-साह्वयः—आह्वयः—संज्ञा । सान—The Shan

पञ्चाशत्सुन्दरीणां स च पतिरुदगादाख्यपश्चाद्द्विरेफो
वङ्गे यद्वत्कुलीनः कुलकमलभुवां नायकः पद्मिनीनाम् ।
तासां प्रेम्णा च कामं निगडितचरणः सोऽथ लावण्यदाम्ना
ह्रातुं ताः क्वापि नालं धनपतिसदृशः शोभयामास दिल्लिम्*॥७३

कामानैलैर्ह्रवाणैर्हयचयशकटैर्लोककोलाहलौघैः
शिञ्जानां कामिनीनां† करचरणभुवां झञ्झनोत्थैश्च शब्दैः ।
लोकारण्यं तदानीं वनकुसुमयुतं गन्धसम्बन्धवत् तत्
देशीयैर्वाद्यभाण्डैर्दशदिनमभितः कम्पयामास व्योम्नम् ॥७४॥
(युग्मकम् ।)

विलोचीस्थानानां क्षतिकरक्षतं वस्त्रसदनं
नृपाणामावासस्य च वितनुते स्मैव कदनम् ।
विहङ्गैर्मातङ्गैः खचिततरमेवञ्च मुखरं
वहिर्द्वारे चञ्चत्शतशतपताकाद्युतिधरम्‡ ॥ ७५ ॥

states. क्रयविक्रयस्य, भूपस्य, राज्यस्य च—एतेषां सर्वेषां मूर्त्तीभूतानां मुद्राणां भारं मनुष्यस्कन्धे समर्पयन् इत्यर्थः । These men rode all the way in order to reach Delhi.

* "Youth Hsenwi from the northern states, who has 50 wives and goes by the title of 'The flower round whom butterflies flutter'."—*Bengalee.*

† कामिनीनाम्—Such as the sister of Keng Tung Sawbwa, Top Htilda; Yawghwe, the only lady with title from the Burmese court. शिञ्जा—Tinkling of ornaments.

‡ अधुना विलोचीस्थानीय-प्रधानपुरुषाणां (Camps of Baluch chiefs) पटभवनानि वर्ण्यन्ते (७५—७६)। "On the east side of the Lawrence Road are the chiefs of the North-west Frontier and Baluchistan." विलोचीस्थानानां—विलोचीस्थानवासिनामित्यर्थः ; "जनपदे लुक्" इति तद्धितप्रत्ययस्य लोपः । कदनम्—तिरस्कारमिति यावत् । नृपभवनेभ्योऽपि सुदृश्यतरमित्यर्थः ।

नृणां भीमाः सीमानमपि परिलङ्घ्येव वपुषा
सितोष्णीषाः कीशानुसृतिमिव कर्त्तुं व्यवसिताः ।
स्वभिर्दण्डैश्चण्डैरपि च फलहन्तारमसकृत्
कृतघ्ना निन्दन्ति व्रतमिदमुपेता ध्रुवममी* ॥ ७६ ॥
(युग्मकम् ।)

आयानथासीत्सिकिमाख्यराज्यात्
पुत्रो नरेन्द्रस्य निकाय्यात् ।
वादे नियुक्तोऽतिथिरस्य सङ्ग-
मुद्द्योतयन् भोटसुतो रराज† ॥ ७७ ॥

प्रकाण्डदण्डोपरि नीललोहिता-
वराः पताकाः शतशोऽभिरञ्जिताः ।
पथिद्विपार्श्वे खलु तासु सुस्थिरे
शुभस्तुतीनां निचया विरेजिरे‡ ॥ ७८ ॥

---

अनेन श्लोकेन तानेव वेलुचीस्थानवासिनः वर्णयन्ति । नृणां सीमानं परिलङ्घ्य—साढ़ैविहस्तादपि उन्नतराकृतय इत्यर्थः । कीशानुसृतिं—मर्कटताड़नमिव दण्डादिभिः स्वभिश्च कर्त्तुमुद्युक्ता इवेत्यर्थः । ते फलहन्तारं कार्य्यफलविघातकञ्च निन्दन्ति, इत्येव तेषां व्रतमिति तात्पर्य्यार्थः ।

सम्प्रति वङ्गदेशीय-नृपतीनां पटभवनं (Camp of Bengal Chiefs) वर्णयितुमुपक्रमते (७७—८६) । तत्रादौ सिकिमनृपतिपुत्रस्य पटभवनं वर्ण्यते (७७—८४) । "In the absence of the Maharaja of Sikkim through illness, his son and heir, Sikhyong Ṭulk, represented him." निकाय्यम्—गृहम् । "Ujen Kazi, the *vakil* of the independent state of Bhutan is a *guest*." वादे नियुक्तः—*i.e.* The *Vakil*, lawyer.

"A row of tall masts, with prayers printed on red, green and blue cloth, led to the entrance to a large courtyard."—*The Empress.*

मार्गाग्रतश्चत्वरभूविभागे
तिब्बद्दुकूलेन कृताङ्गरागे ।
पताकिकाविद्रुमपुष्पितानि
सौभाग्यचिह्नानि च तानि तानि* ॥ ७९ ॥
चतुर्षु कुड्येषु तथाऽत्र मध्ये
बुद्धादिसिद्धच्छवयोऽपि मेध्ये† ।
ततः परं श्रीसिकिमाधिभर्त्तुः
सुकीर्त्तिमत्यश्च सुशिल्पकर्त्तुः‡ ॥ ८० ॥
पुरश्च पश्चात्प्रतिमूर्त्तयोऽष्टा-
विहैव शान्त्या वरदेहयष्ट्याः ।
शरीररक्षासु तथा प्रशस्तं
दैत्यस्य तूर्द्ध्वं सकरञ्च मस्तम्§ ॥ ८१ ॥

---

* "The courtyard was formed of Thibetan cloth emblazoned with emblems of good luck, while the centre was occupied by the same sig[ns] worked in flowering plants."—*Ibid.* पताकिकासु अङ्कितानि यानि द्रुमाणां पुष्पाणि, तद्युक्तानि इत्यर्थः ; "तारकादिभ्य इतच्" । सौभाग्यचिह्नानि आसन्निति शेषः ।

† "The walls (of the courtyard) were adorned with ancient portraits of saints, painted on large banners." अत्र—चत्वरे । कुड्येषु—*i.e.* In the walls. छवयः—आसन्निति शेषः ।

‡ अस्मादेव चत्वरात्परत एव पटभवनं तस्य नामार्थम् आसीत् ।

§ "The roof of the *main-room* was covered with signs, the head and hands of the protective demons being conspicuous, while the 8 emblems of *happiness* (शान्तिः) were worked on colours, four on the front and four on the back of the tent."—*Ibid.* इहैव—अत्र भवने । शान्त्याः प्रतिमूर्त्तयः, दैत्यस्य च मस्तकम् अत्र भवने अङ्कितमासीदित्यर्थः । ऊर्ध्वं—छदतः ऊर्ध्वदेशे (roof).

सुवर्णभाण्डै रजतस्य पात्रै-
रधिष्ठितञ्चापि मनुष्यगात्रैः ।
मध्ये च लामागणहेमवेदिः
तस्यास्य राज्ञो वियदभ्रभेदि* ॥ ८२ ॥

सुचारुहेमाङ्गुलिवेष्टनाद्यै-
स्तिब्बतप्रदेशप्रभवैश्च वाद्यैः ।
ढक्कादिकानामपि ताड़ितानां
त्विषाहृतं यत् तरवारिकाणाम्† ॥ ८३ ॥
(विशेषकम् ।)

तिब्बतप्रदेशोद्भववस्तुजातं
गृहे यथेष्टं परितोऽत्र भातम् ।
आकर्षयन्ती प्रथमा नृदृष्टी-
र्दिल्लग्रामियं नूतनिकेव सृष्टिः‡ ॥ ८४ ॥

---

* "The interior displayed a complete Lama Altar with magnificient specimens of ecclesiastical work in gold and silver *plate*. On the walls were ancient emblems of embroidered priestly robes surmounted by aprons of *carved human bones*." वियति नभसि यत् अभ्रं मेघः तद्भिनत्तीति तथोक्तम् ।

† "Scattered about were quaint swords, handsome rings, enormous trumpets and various curios from Thibet." अङ्गुलिवेष्टनम्—अङ्गुरीयम् (rings).

‡ "The Camp was one of the brightest and most interesting in Delhi. This was the first occasion on which a complete Thibetan Camp had been seen in the plains of India."

वस्त्रालयेऽस्मिन् गुणराजिभाजा-
मभून्महान् कोचपतिर्हि राजा ।
स्वाधीनतायामयमेव भूपः
सर्व्वाग्रतो यः प्रथमः स्वरूपः * ॥ ८५ ॥

अभ्रेष्टकाचूर्ण इवातिपन्था
गृहाग्रतो यस्य च दुःखहन्ता ।
अद्यापि योऽसौ चलतां सुखाय
प्रादुर्भवत्येव सुदीर्घकायः † ॥ ८६ ॥

वंशावतंसो भुवि यस्य वंशो
गिरीशवंशस्य स कश्चिदंशः ।
योऽद्यापि लोकैरिति गीयमानः
राजाऽच लण्डेश्वरतुल्यमानः ‡ ॥ ८७ ॥

वंशे यस्य पुरा पुरारिरचिते नीलाचले निर्म्मले
जातेनैकमठो नृपेण महताऽकारि श्रिया कर्म्मठः ।

---

* पञ्चभिः कोचविहारपतेः पटभवनं (Camp of H. H. The Maharaja of Cooch-Behar) वर्ण्यते (८५—८९) । अस्मिन्—प्रदेशे इति यावत् ।

† अतिपन्थाः—"न पूजनात्" इत्यनेन समासान्तो न । "अतिरतिक्रमणे च" इत्यनेन 'अतेः' पूजनार्थकत्वम् । अतिपन्थाः—A good road. अभ्रम्—Talc. इष्टकाचूर्णान्यभ्रचूर्णैः सह मिश्रीकृत्य पुरोवर्त्तिनि मार्गे प्रदत्तान्यासन् इत्यर्थः ।

‡ गिरीशवंशेत्यादि— शिववंशप्रभवोऽयं राजा इति पुराणी कथानुसन्धेया ।

प्राक् स्पर्शभ्रमयोर्मनोभवगुहागुप्ताऽप्यगुप्तेव सा
कामाख्या स्वयमस्ति यत्र परमाराध्या शिलाख्यासने* ॥८८॥
शुभ्रे योऽसौ मनोज्ञे किरणमुखरितैरुर्ध्वरत्नैरनल्पे
मुक्तादाम्ना च हीरैरिह पटभवने लोचनानन्दभूमौ ।
केशैर्वेशप्रवेशैर्मरकतखचितैरिन्द्रवन्मिन्मुरूपे
लोकारण्ये ससैन्ये नरपतिमहसा दिद्युते कोचभूपः† ॥८९॥

गेहं यदीयं करिणां हि देहैः
प्रियाभिरासादितगात्रलेहैः ।
पीतं सितं रक्तिमभापरीतं
नीलं तथा चारुनिभं करीतम्‡ ॥ ९० ॥

आसीद् यद्गेहमध्ये नयनमधुविलासेऽनेकमातङ्गलीला,
धूली वासन्तहोलीवदरुणवसना मूर्त्तिमत्यागतेव ।
स्तम्भे स्तम्भे च तस्मिन् रजततरुघटाकारकान्तिं दधाने
शोभाराजिर्न नष्टा नववसनकृता भाभिराकाशगाभिः§ ॥९१॥

---

* अस्यैव राज्ञः वंशे पूर्व्वजातेन केनचिन्नृपेण नीलाचले देव्याः कामाख्यायाः मठः निर्म्मितः प्रतिष्ठितश्च इति कथा श्रूयते । यस्य वंशे जातेन नृपेण पुरा मठः अकारि— इत्यन्वयः ।

† "The Maharaja of Cooch-Behar displayed gorgeous dresses and jewels."—*Bengalee.*

‡ अधुना काशीनरेशस्य पटभवनं (Camp of H. H. The Maharaja of Benares) वर्ण्यते (९०—९२) ।

§ नयनानां सम्बन्धे मधुमयविलासरूपा अनेकगजलीला आसीत् । वसन्तकालीयहोलीवत् रक्तवसना धूली तत्र गेहे आसीत् । तस्मिन् गेहे रक्तवर्णेष्टकाचूर्णधूलीनां प्रादुर्भावे सत्यपि स्तम्भानां धवल-

खद्योतैर्हीरकौरैः सति दिनकिरणे यत्र खेलायमानैः
सार्द्धं वैयाघ्रचर्म्मोद्दृतमिव विदधत्काञ्चुकञ्चापि गात्रे ।
मुक्तानक्षत्रसङ्घैर्भुजगमिव पुनर्मस्तकस्यापि वेष्टम्,
राजा रेजे च तस्मिन् शिवइव स शिवानन्दनामाटवीस्थः* ॥९२
(विशेषकम् ।)

वस्त्रालयेनैव मयूरभञ्जो
विभूतिमन्यस्य नृपो बभञ्ज ।
तेनैव चाधःकृततद्विवादी
रराज चास्मिन् त्रिपुरेश्वरादिः† ॥ ९३ ॥

इत्थं तत्तत्प्रदेशे करकमलनलव्यक्तसौन्दर्य्यभाजां
राज्ञीनां पद्मिनीनां कनककदलिकास्तम्भसम्भावितानाम् ।
वक्त्रैः क्षुभ्यत्पयोजैर्नयनशफरिकाखेलनैः सद्म तत्तत्
पादन्यासप्रवाहं सितसिचयपयःफेनपुञ्जं सरोऽभूत्‡ ॥ ९४ ॥

स्फुटा न नष्टा इति चित्रमिति तात्पर्य्यार्थः । वासन्तेति—'सन्धिवेले'त्यादिना अण्, अन्यथा कालात् ठञ् स्यात् । झालीति—झालाकाशब्दस्य प्रतिरूपकः शब्दः ।

* आनन्दाटवी—आनन्दवनम् । शिवस्यानन्दवनम्—काशीत्यर्थः । काशीनरपतिं शिवरूपेण वर्णयति । वेष्टं विदधदित्यन्वयः ।

† मयूरभञ्जनृपतेः (Camp of H. H. The Maharaja of Morbhanj), त्रिपुरेश्वरस्य च (Camp of H. H. The Maharaja of Hill-Tipperah) पटभवनान्युल्लिख्यन्ते । तेनैव—वस्त्रालयेन । अधःकृततद्विवादी—तिरस्कृतनिन्दकः ।

‡ अधुना तत्तत्पटभवने निवसन्तीनां राज्ञीनां किञ्चिद्वर्णना क्रियते । सरोवररूपेण च नृपतिपटभवन-समूहं वर्णयित्वा, पटभवनविवरणं समाप्यते । करकमल:—करकमलदण्डः । तत्तत्सद्म सरोवरवत् अभूदित्यन्वयरीतिः । पद्मिनीति नारीणां जातिभेदविशेषः । सितसिचयः—धवलवसनम् ।

सङ्क्षेपतः प्रकटिता श्रवणादिदानी-
मित्येव वस्त्रभवनस्य समाप्तिवाणी ।
काव्याङ्गवृद्धिभयतो न निवेदितं यत्
चन्तव्यमेव विदुषा सदयेन तत्तत् ॥ ६५ ॥

इति श्रीश्रीश्वरीये दिल्लिमहोत्सवे खण्डकाव्ये
पटवासभवनवर्णनो नाम द्वितीयः सर्गः ।





# तृतीयः सर्गः ।

सार्द्धद्विक्रोशदूरे प्रकटपटघटात्वासतो दर्शनीया
सैन्यप्राचीरशोभा शतशतवसना पञ्चवर्णा दिदीपे ।
सैन्यैर्या युग्मषट्कैर्दशशतसहितैर्वेष्टिता भीमरूपै-
स्तन्मध्ये कान्तिकान्ता गृहगतमहसा लक्षिता सा सभासीत्* ॥१

गङ्गारामाभिरामाकृतिरजनि सभा लज्जिताकारहर्म्या
तुङ्गा शुक्लप्रभाभिर्ध्वजपटकलसैः सर्व्वशिल्पैकरम्या ।

---

* सभागृह-(Durbar-Amphitheatre)-वर्णना आरभ्यते (१—१२)। "The *Amphitheatre* is on the site of that constructed for Lord Lytton in 1877, and closely resembles it in its *horse-shoe* shape. The Imperial Dais has been placed in the upper end instead of at the centre." युग्मषट्कै-रित्यादि—Twenty-six thousand soldiers along the Durbar Road and round the Amphitheatre (*Vide* note on stanza 25),

स्तम्भारम्भैरनेकैस्तदुपरिनिहितैः केतनाडम्बरैः स्वैः
शब्दोत्कृत्य गर्व्वं पतपतवचसा साह्वयन्तीव सर्व्वम् * ॥ २ ॥

द्वितीयेन्दुर्यद्वत् त्रिदिशि करजालैः सितनिभ-
स्तदाकारा स्फारा समजनि सभा दिव्यविनिभा ।
चतुर्थस्तत्कोणः किमपि न दधौ, केवलनभो-
वह्निस्त्वेकः स्तम्भो ध्वजपटपताकाद्युतिधरः † ॥ ३ ॥

द्विपञ्चाशच्चूड़ां लघुलघुशरीरां विदधती
तथा गुर्व्वीमुर्व्वीं कनककिरणां षखवतिकाम् ।
शतस्तम्भं षष्ठ्याधिकमपि च लौहद्युतिधरं
सभा सा तुङ्गासीत् नवशशिकलाकान्तिधवला ‡ ॥ ४ ॥

तृणैश्छन्ना चायःफलकवसनैर्मूर्द्धनि यथा§
तथा सर्व्वाङ्गेऽपि द्युतिशतवती या च महती ।

---

* "In spite of the huge circumference of the structure, its accoustic properties are admirable." गङ्गाराम.—Rai Bahadoor Gungaram, C.I.E., Executive Engineer.

† सभायाश्चतुर्थः कोणः मध्यभाग इति यावत् किमपि न दधौ, अपि तु केवल-नभः दधौ, *i.e.* शून्यतां दधौ । द्वितीयाचन्द्रवत् अर्द्धवलाकारप्रभा सभाया आसीदिति भावः । स्तम्भः—*i.e.* The Royal Flag-staff.

‡ "This gigantic structure with its *white* roof and its golden-crested dome and its cupolas, has been a conspicuous landmark for many a mile around." लौहमयास्तम्भाः काष्ठाच्छादिता आसन् इति द्रष्टव्यमत्र ।

§ तृणैश्छन्ना इति—निम्ने भूतले इति द्रष्टव्यम् । सर्व्वाङ्गं लौहफलकावृतमपि च श्वेतवसनाच्छादित-मासीत् ।

स्वयं गङ्गारामो जगति कृतनामध्वनिरसौ
यदीयाध्यक्षोऽभूत्क्षयमपि न सा हृष्टिमरसा ? ॥ ५ ॥

दिशि प्राच्यां द्वारं शतमितकरैरायततरं,
सयुग्मं दिग्द्वारं दधदपि च पश्चात् द्युतिधरम्।
परं स्तम्भाद्द्वाद्यं, तदपि च सहस्रद्वयमितै-
र्नृणां हस्तैर्यत्र ध्वनिरजनि संग्रामरवजित्* ॥ ६ ॥

संसङ्गेहान्तरुद्यल्लघुगृहमुदभूद्दर्शनीयं तदैकं
शोभासाम्राज्यमध्ये प्रथममिव, न यत्तुल्यमन्यन्न मेने।
गङ्गारामस्य कर्त्तुर्मतिभिरुपचिते तत्र लावण्यकुण्डे
कैः कैर्धौतं न गात्रं तरुणमरुणभाद्योतमानार्घ्यपात्रे ?† ॥७॥

इयं हि नृपतेः सभा रजतशुक्लवर्णप्रभा
दशद्विविमिताध्वना स्फुटकपाटरूपानना।
इयं प्रवरशिल्पिना रुचिरहेमरत्नासना
विभक्तरथचत्वरी बहुतरश्रिया भास्वरी ॥ ८ ॥

---

* पूर्व्वदिग्भागे पुरतः शतकरायतं द्वारं राजप्रतिनिधेः प्रवेशार्थम्। पश्चाच्च द्वादशसंख्यकानि द्वाराणि दर्शकादीनां प्रवेशार्थम्। स्तम्भात्परं—तृतीयशाकोष्ठस्तम्भस्य पश्चात्। वाद्यमिति—"The massed *bands* within the Amphitheatre were stationed round the Flag-staff in the centre of the arena." ध्वनिरजनि—घोषणासमये इत्यर्थः।

† लघुगृहम्—*i.e.* The arena, under a canopy of cupolas. "The great cupola surmounting the Dais, with its vast dome in white and its golden spire is distinctly conspicuous." अस्मिन्नेव "लघुगृहे" राजप्रतिनिधेः राजभ्रातुश्च उपवेशनस्थानं रचितम्।

इयं सुविषदाकृतिः प्रवरकारुणा स्तम्भिता
विलोक्य भुवि यां जना हृतधियः परं स्तम्भिताः ।
इयं लवणवारिधेर्भुवि कलार्द्धचन्द्रप्रभा
हयचतुर इवोत्तमा किमपि चारुकारुर्नवा * ॥ ९ ॥

इयं नृपगणोज्ज्वला स्फुटितहेमखण्डोत्पला
भ्रमद्भ्रमरगुञ्जिता कुसुमचित्रभापुञ्जिता ।
जयध्वनिशुभस्वना वसनरागभास्वज्जना
महाधनजनादृता रुचिभृता श्रिया सत्कृता † ॥ १० ॥

इयं सकनकावलीद्युतिसुखट्वया राजितं
वरासनमुपेयुषी नृपशरीरविभ्राजितम् ‡ ।
सदच्छमुकुरत्विषा परिगृहीतलोकानना
विभाशतवती सती विहितसर्व्वसम्मानना ॥ ११ ॥

इयं किल महोदधिर्हयगजादियादोऽङ्किता
दृहज्जनकथाजला द्युतिकदम्बकेलीञ्चिता ।
गजादिरदकाकिनी मनुजवेगवातायिता
सुवर्णरजतच्छटावकुलरत्नभूषान्विता § ॥ १२ ॥

* कारुः—Artist. स्तम्भिता—स्तम्भविशिष्टा कृता । स्तम्भिताः—विस्मयात् जडीकृताः, paralysed, *i.e.* astonished. हयचतुर इव—*Vide* note on stanza 1.

† धनिकभवनस्थितीथानरूपेण सभां वर्णयति ।

‡ नृपासामासनानि हिरण्मयान्यासन्निति द्रष्टव्यम् ।

§ समुद्ररूपेण सभां वर्णयति चतुर्भिः श्लोकैः । काकिनी—Cowri or shell, कौड़ीति भाषा । किमित्यलीके ।

नृणां शिरसि शोभिते मुकुटचन्द्रबिम्बोज्ज्वला
बृहत्कलकलध्वनिध्वनितसर्व्वदिङ्मण्डला ।
कषायवसनाम्बुभृत् नरवराख्यशोभासरित्*
नरेन्द्रमुखपङ्कजा विविधसर्पमत्स्यध्वजा ॥ १३ ॥

क्वचित्कलकलावली सघनवारिवादध्वनिः
पदोत्थितरजःखनिर्ध्वनिकराग्निवाणाशनिः† ।
वपुःस्थवरकञ्चुकस्फुरितशुक्तिमुक्तान्विता
महामुदम्तायता शकटयानवेगातता‡ ॥ १४ ॥

लसत्शयनमन्दिरद्युतिविला च शय्याशिला
नृणां चरणचारणोत्थितरजःसमूहाविला ।
अहो नयनदर्शने मनुजतटवेलावनी
सुभीमकलनादिनी मरकतश्रिया पावनी§ ॥ १५ ॥

नृणां हृदयकन्दरे सुचिरलग्नवार्त्ताव्रजा
भविष्यति दिनेऽपि या, समदहस्तिहन्दध्वजा¶ ।

---

* नरादीनां शोभा एव सरित्स्थानीया ; समुद्रे नद्यः पतन्तीति प्रसिद्धेः । नरेन्द्रमुखान्येव पङ्कजस्थानीयानि, सागरे पद्मवर्णनं कविसमयप्रसिद्धमिति द्रष्टव्यम् । ध्वजा एव सर्पमत्स्यस्थानीयाः ; उपमितसमासोऽत्र पदे द्रष्टव्यः । सागराम्बुन्दोहव इत्यपि द्रष्टव्यः ।

† समुद्रे वज्रनिर्घोषः, अत्र च अग्निवाणानां (= Canons) ध्वनिः ।

‡ समुद्रादमृतमुद्भृतम् ; अत्र मुदेवामृतं तेनायता विस्तृता । वेगैरातता व्याप्ता इत्यर्थः ।

§ समुद्रे विलसन्ति, अत्र शयनमन्दिरद्युतिरेव विलस्थानीया । शय्या एव शिलास्थानीयाः । समुद्रे शैलाः सन्तीति प्रसिद्धम् । वेला—तटः । मनुजा एव तटस्थवृक्षमयवनस्थानीयाः । वेलावनीत्यत्र तत्पुरुषसमासः द्रष्टव्यः, अन्यथा बहुव्रीहौ कृतेऽनुपसर्ज्जनात् ङीषभावापत्तेः ; तेन इयं सभा वेलावनस्वरूपिणीत्यर्थः ।

¶ इयं भविष्यति कालेऽपि नृणां हृदये चिरलग्नवार्त्ताव्रजा ; एतत्कथां न मनुष्या विस्मरिष्यन्तीत्यर्थः ।

इयं ध्वजपटाङ्किता विविधरत्नभूषान्विता<br>
निरस्तविपदागमा द्युतिसहस्रनाकोपमा ॥ १६ ॥<br>
विघूर्णितमहाभटा सनरराजकान्तिच्छटा<br>
इहज्जयकथागमा रुचिरवेणुवाद्योद्यमा।<br>
प्रवेशपथरथकैर्मनुजदुर्धियां भक्तकै-<br>
र्महोत्सवरवैर्घना स्फुरितरागरक्तासना* ॥ १७ ॥<br>
अलङ्कृतमहापथा तदुपरि श्रियाऽनोरथा†<br>
चतुर्दिशि शशिच्छटाघटितचारुशाखापथा।<br>
नृणां भुवनमण्डलेऽनिमिषचक्षुषां यत्कथा‡<br>
क्व साम्प्रतमुपागता? न च विभाति नष्टव्यथा! ॥ १८ ॥

(एकादशभिः कुलकम्।)

नृपेऽप्यगसि दण्डपे विलसितेऽत्र भूखण्डपे§<br>
पुनः पुनरभीप्सिते सदसि तत्र सन्मण्डपे।<br>
नृपानृपघने जने स्थितिरभून्मुदैकासने<br>
न कोऽपि नियमो यतः पदमगात्तदानन्दतः ॥ १९ ॥

---

रागः—अनुरागः। रक्तासना—The blocks were covered with *red* cloth.

अनस्—Cart; रथः—Any vehicle in general.

विस्मयादनिमिषचक्षुषां, यत्कथा यस्याः सभायाः कथा आसीत्, अद्यापि आस्तीति शेषः।

अगसि अपराधे दण्डपे (दण्डं पाति रक्षतीति) दण्डं विधातरि, "यथापराधदण्डे" इत्यर्थः। भूखण्डं भूविभागं पाति पालयतीति भूखण्डपः। ईदृशे नृपे तत्र सभायां पुनः पुनः दर्शकैरभीप्सिते सतीति शेषः। आनन्दतः कोऽपि नियमः मर्य्यादा पदं न अगात्; "आनन्दे नियमो नास्ति" इति भावः।

यथाविहितमादरं सकलमेवमीयुर्जनाः
प्रसन्नवदनाः सुखं परममापुरुच्चासनाः।
मिथो विलसदाग्रहाः,* विलसिताश्च पाणिग्रहाः,
जनेषु न च निग्रहाः, सुखिनराः स्फुरद्विग्रहाः ॥ २० ॥

अस्मिन् सद्मनि कूर्म्मपृष्ठसदृशे चन्द्रातपालङ्कृते
माल्यग्रीवसुवर्णकुम्भनिकरा मूले च रम्भातरोः।
आनिन्युर्मुदमद्भुतां भुवि नृणां पार्श्वद्वये वर्त्मनः
स्तम्भाः† सूर्य्यमरीचिभास्वरविभा, यत्तोरणं शोभनम् ॥ २१ ॥

अग्रेस्तम्भमदीपयद्धिमरुचिः सूर्य्यश्च नक्तन्दिनं,
यं राजध्वजमब्रुवन् जनगणास्तुङ्गं पताकाश्रितम्।
योऽयं वायुविघट्टनात् ठनठनघण्टो न वण्टश्च यः
सिंहाक्रान्तमुपान्त्यमस्य च पुनर्धत्ते स्म तारापथम्‡ ॥ २२ ॥

द्विषट्सहस्रैरधिकैश्च सैन्यैः
सभागृहद्वारमशोभि चान्यैः।

---

* सर्व्वत्र "आसन्" इति शेषः। आग्रहः—औत्सुक्यमात्मपरिग्रहे इत्यर्थः। पाणिग्रहाः—परस्परं हस्तमर्द्दनम् (Hand-shaking)। निग्रहः—Aversion, disliking. विग्रहः—देहः।

† स्तम्भाः—यस्येति शेषः।

‡ राजध्वजः—The Flag-staff (*vide* stanza 3 above). ठनठनघण्टः—ठनठनशब्दकारिणी घण्टा यस्मिन् इति तथोक्तः। यस्य न वण्टः—*i.e.* न क्षुद्रः; दीर्घ इत्यर्थः। उपान्त्यम्—Vicinity. अग्रेस्तम्भं—यस्य ध्वजस्येति शेषः। अग्रेस्तम्भमित्यत्र अलुक्समासः, अग्रे स्थितं स्तम्भमित्यर्थः।

क्रोशार्द्धदूरे खपुरीव शोभा
तेस्तैरभून्नेत्रशतप्रलोभा * ॥ २३ ॥

अहो किमपि भावली समधिका च तत्रार्व्वतां
बभञ्जुरिह ये पुनर्धनवतां दृढगर्व्वताम् ।
न च स्म परिलक्ष्यते नृदृशि तेषु किञ्चित् त्रणुः
तदा विपुलकान्तिमत्किमपि चारुहेम्ना वपुः ॥ २४ ॥

सैन्यस्यानन्तरं भूस्तदुपरि शतशो दर्शकाः प्रादुरासन्
गोलन्दाजाख्यसैन्यैः पदकृतगतिभिर्वाहनावाहनैश्च ।
तत्पश्चात्कुञ्जरश्रीरवनजनयुता स्वर्णरौप्यास्तृतासीत्
बुद्धेः कौशल्यवीर्य्यैर्ध्वनितगललसद्घण्टया कुण्ठया च† ॥२५॥

अश्वैकः किल केम्पनामनगरात् लम्बोदरः सुन्दरः
प्रागाद्द्वारमपूर्व्वपर्व्वसदसो यो दीर्घपृष्ठश्रिया ।

---

* राजप्रतिनिधेः सभागृहप्रवेशात्प्रागेव सैन्यसज्जा, दर्शकमण्डलीनाञ्च प्रवेश आसीत् ; तदेव सम्प्रति वर्ण्णमारभ्यते । "The troops numbering about 37,000 men assembled at Delhi were drawn up on the plane opposite the entrance to the Amphitheatre and along the road from the Viceregal Camp to the Durbar." "The ruling chiefs present sent their troops and retinues to the place of the Durbar."

† "The *elephants* and the bulk of the retinues were disposed on the plane to the South-west of the Amphitheatre, while the *mounted* men lined the Prince's Road and the Review Road leading to the Durbar." "दर्शकाः" इत्यादि—"The Amphitheatre was filled with 12,000 spectators." अवनजनाः—आधोरणाः ।

लोकानां तरणिश्च पर्व्वजलधेरक्षौहिणीसंख्यकं
शोभापर्व्वसमग्रमात्मवपुषा यो धारयन् संस्थित: * ॥ २६ ॥
यद्वत्प्राक् भुवि सिन्धुराजदलने वीरैः कृतास्फालनैः
सैन्यानां रथचक्रघर्घररवैराध्मानिता मेदिनी ।
तद्वत्तत्र तदध्वनि ध्वनिरभूत् निर्घातजिद्दारुणो
यानैर्यानमलङ्घयच्च सहसा दिक्चक्रमाक्रम्य स: ॥ २७ ॥
(युग्मकम् ।)

आरात्पश्चिमदिश्यनेकसुषमान्येकाधिकैकादश-
द्वाराण्यद्भुतदर्शनानि विबभुर्नृणां प्रवेशे तदा ।
तैस्तैरेव महोदया विविशुरप्युच्चैः सभामण्डपं†
पाश्चात्त्या मनुजाश्च खाँप्रभृतयश्चीनाश्च जापानत: ॥ २८ ॥

वह्निर्नृणान्तत्र सभा प्रवेशं
निवारयामास विना नरेशम् ।
एकैकमौयुर्नरराज्यभाज-
स्तेनैव पूर्णः स च सत्समाज:‡ ॥ २९ ॥

---

* अधुना सर्व्वेषां सभागृहप्रवेशवर्णना प्रस्तूयते ; तत्रादौ प्रवेशमार्गं निर्दिशति, प्रवेशार्थिनाञ्च पथि यानाकलरवादिकञ्च वर्णयति (२६—२८) । अध्वा—*i.e.* The Durbar-Road (*Vide* Canto II. 23 –24). अक्षौहिणीसंख्यकं शोभासमग्रं धारयन् स्थित:—"Along either side of the Durbar Road will be massed the *troops* of the Imperial service cavalry, mounted infantry, corps cavalry, Royal Horse Artillery &c. &c."

† "*Spectators* reached their places at the *back* of the Amphitheatre leading to the Blocks." (*Vide* stanza 6, note.)

‡ सभागृहप्रवेशनियम शासनग्रहणप्रणाली च कथ्यते (२९—१४) । "Guards were post-

ससन्निधा द्वारदृशा ततो जनं
विलोकयामास कृताभिवन्दनम् ।
प्रवेशयामास तदाशु सैन्यकान् *
सितस्मिताभा परिनष्टदैन्यकान् ॥ ३० ॥
(युग्मकम् ।)

सभा बभौ मण्डपमध्यगामिनी
सुवर्णभूषाकलितेव कामिनी ।
कुपक्षदृष्टेरभितो विरोधिनी
कवीश्वरस्तावकवाक्यबोधिनी ॥ ३१ ॥

ते ते जनाः काञ्चनकान्तिमन्तः
प्रदक्षिणेनैव सभां विशन्तः ।
प्रसूनवत्कञ्चुलिकाभिरामा
विरेजिरे तां प्रति दृष्टिकामाः ॥ ३२ ॥

गजेन्द्रपृष्ठेषु निधाय खट्वाः
केचिद्बभुः पीवरवीरपट्टाः ।

---

ed at the separate entrances at the *back* of the Amphitheatre leading to the various blocks of seats for high officers and Ruling chiefs." बहिर्मुखा – *i.e.* Outsiders who could not secure admission-tickets, "बहिर्व्र-पवन"मितिवत्प्रयोगः । सभेति कर्तृपदम् ।

* सैन्यकान्—सेनायां समवेता इति सैन्याः; *i.e.* Soldiers *in array* (अतएव पुंलिङ्गे प्रयोगः, एवमन्यत्रापि द्रष्टव्यम्) । सभेति कर्तृपदम् ।

ययुः समेत्याथ पुनः सहट्टं
लौहाध्वना यामुनतीरघट्टम् * ॥ ३३ ॥

क्वचिच्च दूरेऽपि तथा नदूरे
प्रभा च शोभा च समं पुपूरे ।
सर्व्वञ्च तत्तन्न मिथो विरोधि,
वाष्पौजसा यन्निकटे व्यबोधि † ॥ ३४ ॥

विद्रोहाट्टनिर्म्मितादिह पुरा येऽरक्षयन्निंलिश-
स्तेष्वद्यापि च भूतले कतिपये जीवन्ति वृद्धा जनाः ।
तेषामद्य सभाप्रवेशसमये जाग्रद्विषादस्मृतिः
सद्यः कर्षितलोकदृष्टिरभवत् ज्यायांश्च वंशीध्वनिः ‡ ॥३५॥

---

* श्लोकद्वयेन प्रसङ्गतः उत्सवार्थं निर्म्मितानां लघु-लौहशकटानां (Light Durbar Railway) कथामपि किञ्चित्कथयति । "The Delhi-Durbar-Light-Railway opened for traffic on the 1st December ; the first station being the Kashmir-gate and the last within a few yards of the Polo-ground." "It carried 102,098 passengers from first to last."—*Government Despatch.*

† नदूरे—अत्र नञर्थस्य 'न'शब्दस्य सुप्सुपेति समासः ; नञ्समासे तु नलोपः स्यात् । वाष्पशकट-प्रसादात् दूरता सामीप्यञ्च तुल्याकारं बभूवेति भावः । यत्—यस्माद्धेतोः ।

‡ अधुना सभाप्रवेशादिकं कथयितुमुपक्रमते । तत्रादौ सिपाही-विद्रोह-निवारकाणां सेनानां (Veterans of the Mutiny) प्रवेशोपवेशनादिकं कथयति (३५—३८) । "At 11-15 A. M., the Surviving Veterans of the Mutiny, both European and Native, marched into the Amphitheatre by the *front door*, to the block alloted to them, the massed bands within the arena playing a suitable march." इंलिशः—*i.e.* इंराजान्, The English. जाग्रद्विषादस्मृतिः—"Imperial India felt the thrill of proud eye-moistening pity in that straggling band of survivors of those who kept India in its evil day."—*Englishman.*

चत्वारिंशज्जनानां परिणतवयसां मध्यतः संविभातं
सैन्यं तत्तन्महत्त्वद्दयमथ बधिरं हन्त ! काणञ्च खञ्जम् ।
केचित्तस्मिन् सकम्याः स्खलितपदगतेरन्यमेवाश्रयन्तः
श्वासन्यासैश्च कण्ठे घरघरवचनाः पङ्गवः कालतोऽन्ये * ॥३६॥
ये पूर्व्वं नृपमान्यसैन्यजलधौ यादोघटाः संस्थिता-
दस्यूनामपि दस्यवो, विपदि सन्नृणां सहायाश्च ये ।
ते चामी वत ! नष्टयौवनमदा जाग्रद्गदा नीरदाः
काले शुक्लकचीकृता रुरुचिरे यष्ट्यां दधन्मुष्टयः † ॥ ३७ ॥
ते सञ्चक्रुर्नवमिव सदस्तन्मरागं विरागं
सद्यो वार्द्धैः पलितचिकुरा नापि हर्षैर्न दुःखैः ।
श्रुत्वा गीतं तदतिमधुरं धारयन्तोऽश्रु नेत्रे
संसारस्याघटनमसकृत्संस्मरन्ते सदःस्थाः ॥ ३८ ॥
(कलापकम् ।)

अथ प्रवेशोचितवेशराशी-
राज्ञां शुभेऽङ्के प्रभया व्यभासि ।

---

* "The entrance of the Veterans, some of them *limping* and feeble, but proudly erect and be-medalled, produced an immense impression, the great assembly cheering them to the echo." "An old sepoy was *carried in* by British officers because he was feeble."

† यादोघटा इव संस्थिता जलधौ इत्युपमेयम् । नीरदाः—निर्दशनाः, गलितदन्ताः ।

गतश्च तस्मिन् वरदाधिराजः
काश्मीरराजोऽपि तथा रराज* ॥ ३९ ॥

आसीन्महीसूरपतेः प्रदर्शः
समस्तराज्ञां समनःप्रहर्षः ।
निजामराज्यस्य नरेन्द्रराजो-
ऽप्यभूत् श्रिया रञ्जिततत्समाजः ॥ ४० ॥

आसीत् त्रिवाङ्कुरपतेः सदसि प्रवेशः
स्वर्गेऽमरेष्विव लसत्सु च यो धनेशः ।
यो वङ्कुराङ्कुरचयैरिव चारुरेखं†
सत्कञ्चुकञ्च विदधे विकसन्मयूखम् ॥ ४१ ॥

वस्त्रैर्वृता प्रेक्षितनेत्रमात्रा
सभादिदृक्षारचिताङ्गयात्रा ।
प्रौढापि भूपालनरेन्द्रनारी
बभौ नराणां नयने कुमारी ॥ ४२ ॥

सुवर्णचन्द्रार्द्धकलाढ्यपात्री-
मेकां स्वहस्ते दधती सुगात्री ।

---

* अधुना भारतीयनृपतीनां प्रवेशोपवेशनादिकं कथयति (३९—४५) । "Ruling Chiefs, as they arrived, were met on alighting by officers of the foreign department and the military officers on duty, who conducted them to their seats." "The Ruling Chiefs, Heads of Local Governments &c. reached their seats by the steps at the *back* of their Blocks."

† वङ्कुरः—वकि कौटिल्ये इत्यस्य धोत्वादिकम् उरच्प्रत्ययान्तं रूपम् ।

ददौ नृपायैव च योपहारं
तामेव, कृत्वा चरणप्रचारम्* ॥ ४३ ॥
(युग्मकम् ।)

इत्यादयोऽन्येऽपि नरेन्द्रवर्य्याः
तैस्तैश्च वेशैर्विहिताङ्गचर्य्याः† ।
उद्दीपयामास सदो विशालं
शिरःसु तेषां नवरत्नजालम् ॥ ४४ ॥

इत्थं भूषाच्छटाभिः कलितसुवपुषो लक्षलक्ष्मीविलासै-
रन्येऽप्येवं नरेन्द्राः प्रमुदितमनसो रेजिरे संसदन्तः ।
अन्योऽन्यस्पर्द्धयेव द्रविणशतघटासज्जिता रञ्जिताङ्गी
स्वर्गादभ्येत्य दुर्गात्किमु किरणसरिद्राजसंसत्प्रविष्टा ?‡ ॥४५॥

मध्ये चीणास्तुहिनधवलाश्चारुधम्मिल्लवत्यः
पार्श्वे भर्त्तुः सदसि विपुले कॢप्तहैमासनेषु ।

---

* "Amongst them was a dainty *little* figure, veiled heavily in blue, which passed and bowed the Viceroy and when it reached the Duke of Connaught bent and touched the feet of England's Royal Prince: It was the *Begum of Bhupal.*" 'या सुवर्णपात्रमेकम् उपहारं ददाविल्यर्थः । "She presented a richly jewelled gold-box as "Nuzzar."

† 'विहिताङ्गचर्य्याः'—बभूवुरिति शेषः ।

‡ "The *costumes* of the Chiefs were marvels of richness in material and colour. Their jewels were priceless, consisting of diamonds, pearls and emeralds."—*Englishman.*

अम्भोजानां सरसि वदनैः कान्तकान्तिं दधानाः
ज्योत्स्नास्नाता इव शुशुभिरे तत्र पाश्चात्त्यनार्य्यः * ॥४६॥

तासां श्वेतविशुद्धमर्म्मरशिलापट्टप्रभाभासुरे
भाले चन्द्रकलेव चारुमुकुटज्योतिःकदम्बद्युतिः ।
कण्ठे लम्बितकाञ्चनाञ्चितचमत्कारस्य हारस्य च
श्वेताङ्गादुदिता प्रभा धवलितं चक्रे पटीमण्डपम् † ॥४७॥

संस्थाप्येषत्स्फुरितनयना काञ्चनीं देहयष्टिं
हैमे पीठे ज्वलितमुकुटां लज्जनेनैकलज्ज्या ।
प्रावारेणाचरणकमलं भूयसा संवृताङ्गी
रेजे राज्ञी सदसि कमला तत्र भूपालराज्यात् ‡ ॥ ४८ ॥

यामासाद्य पुरा धराविजयिनी चार्द्धासने सादरं
मानाभ्यर्थनसम्पदा सहचरीवोच्चैः समाप्रीणयत् ।

---

* सम्प्रति पाश्चात्त्यनारीणां भारतीयनारीणाञ्च (The European and Indian Ladies) उपवेशनादिकं कथयति (४६–५०)। For some of the European ladies present at the Durbar, see note under stanza 51. धम्मिल्लः—Braided and ornamented hair, tied round the head, and intermixed with flowers, pearls &c. (Prof. Wilson.) चारुधम्मिल्लवत्यः—अत्र 'सर्व्वधनीति'वत्समासो द्रष्टव्यः, "हंसचिह्नदुकूलवान्" इत्यादिवत्।

† मर्म्मरशिला—Marble slab ; श्वेतशिलापट्टवत् उज्ज्वलधवले भाले इत्यर्थः। कदम्बाकारज्योतिषां द्युतिरित्यर्थः। हारस्य प्रभा, श्वेताङ्गाच्च समुदिता प्रभा—इत्यन्वयरीतिः। मुकुटम्—Tiara.

‡ भूपालनामकराज्यस्य महिष्यास्तत्र सदसि उपवेशनप्रणालीमुल्लिखति। "The Begum of Bhupal took her seat amongst the Indian Princes with her veil on, and this was a very noticeable feature." आचरणकमलम्—इत्यव्ययीभावसमासो द्रष्टव्यः। प्रावारेण—घनवस्त्रेण।

या जग्राह जनिञ्च केशवकुले ख्याते भुवो मण्डले
सा चास्मिन् ददृशे प्रियेण सहिता राज्ञी विहारेश्वरी* ॥४९॥
अन्या भारतवर्षभूपवनिताश्चान्यैरदृश्यानना-
नानारत्नशतच्छटाभिरुरभिर्या दुर्निरीक्ष्याः स्वतः ।
पश्चात्तत्र सदोऽन्तरे जवनिकामध्ये सुखोच्चासने-
ष्वासीना ददृशुर्नृपप्रतिनिधे राज्याभिषेकक्रियाम्† ॥ ५० ॥

सार् किस्नार् शुशुभेऽत्र सूदनजयी तत्रैव सेनापतिः
ते चान्ये परराष्ट्रगैश्च सचिवैः सार्द्धं डचेशादयः ।
नासीत्तत्र च मानरिक्थगरिमा, नीचैस्तथैकासना-
स्तस्मिन् राजमहोत्सवे नवभवे तद्वत्समाना जनाः‡ ॥ ५१ ॥

---

* एतेन कोचविहारेश्वर्याः तत्र सदसि उपवेशनञ्च कथयति । Her Highness the Maharani of Cooch Behar took her seat with her husband among the Indian Princes. धराविजयिनी - *i.e.* Queen Victoria; केशवकुले—The Maharani of Cooch Behar is the daughter of the famous Keshab Chandra Sen.

† अन्यासां राजरमणीनां जवनिकान्तराले उपवेशनादिकञ्च कथयति । "The most notable ladies present behind the *Purdah* (Screen) were H. H. The Maharani Gaikwar, H. H. The Maharani of Mysore and some other Royal ladies from Travancore, Bhawalpur &c." नृपप्रतिनिधेः कार्ज्जनस्य पश्चात् विलम्बिन्या जवनिकाया मध्ये इत्यर्थः ।

‡ अधुना सेनापतेः (Lord Kitchener), प्रतिनिधीनां (Representatives of Foriegn Powers), राजपुरुषाणाञ्च (English Officers) प्रवेशोपवेशनादिकं कथयति (५१) । सार् किस्नार् = Lord Kitchener. डचेशादयः = Duchesses; some of the European *Ladies*, who were present at the Durbar, were these :—Duchess of Malborough, Miss Lieter, Lady Law, Lady Dickson, Mrs. Copleston, Duchess of Portland, Lady Ibbetson, Lady Elliot, Miss Atherton and others.

राजस्वसा भुवि पुरा सुषुवेऽत्र यश्च
सोऽभन्मुदा गतिविदीपितराजमञ्चः ।
मान्यान् ननाम नमनार्हजनान् स तच्चैः
संवेष्टितश्च जनदृक्कुसुमैः सगुच्छैः * ॥ ५२ ॥

भ्राता नरेन्द्रस्य ततः समागात्
सैन्यं ससज्जं बहुभूविभागात् ।
तस्मिन् प्रविष्टे धृतवत्सधामे
लेडी च तस्यैव रराज वामे † ॥ ५३ ॥

तत्पश्चादुदगान्नृपप्रतिनिधिस्तद्राजसिंहासनं
गात्रोत्थानमथाकरोच्च जनता दृष्ट्वा च तं पार्थिवम् ।
तत्राभूत्करतालिकाध्वनिरपि ज्यायांश्च तन्मानतो
नालीकाग्रमदर्शयंश्च सहसाऽगण्यानि सैन्यान्यपि ॥ ५४ ॥

---

* एतेन राजस्वसृपुत्रस्य (His Royal Highness the Grand Duke of Hesse) प्रवेशोप-वेशनादिकं कथयति (५२)।

† अथाधुना श्रीमतो राजप्रतिनिधेः (Lord Curzon) राजभ्रातुश्च (Duke of Connaught) सस्त्रीकस्य प्रवेशोपवेशनादिकं कथयति (५३—६१)। "Their Royal Highnesses the Duke and Duchess of Connaught left the Viceregal Camp with an escort of one squadron of British and one squadron of Native Cavalry at 11-15 A. M. As the Royal Carriage reached the point where the road turns into the Amphitheatre, their Royal Highnesses were received with a salute of 31 guns. As their Royal Highnesses drove into the arena and approached the dais, the guard of Honour in front of dais presented arms and the bands within the arena played the National Anthem."

एकत्रिंशद्ध्वनिरपि तदा सानलेभ्यो नलेभ्यो
राज्ञोऽप्यासीज्जयजयरवैर्दुन्दुभिस्ताड़ितश्च।
पर्व्वारम्भे जलनिधिजले यादृशः स्यात्तरङ्ग-
स्तादृङ्मन्ये सदसि परितः शब्दराशेः प्रसङ्गः * ॥ ५५ ॥

तस्मिन् गीतमजागरीत् सुमधुरैरिंराजिवाद्यादिभि-
र्यस्मिन् प्राञ्जलयो नृपाः प्रमुदितास्तच्छ्रोतुमग्रेसराः।
यावत्तद्भुवि तावदेव परितो दण्डायमानाश्च ते
नानावर्णविकस्वरामतितरां प्राचीरशोभां दधुः† ॥ ५६ ॥

विवेश च प्राकृतमण्डपाध्वना
वाद्यैरगद्यैर्नवडिण्डिमस्वना।
शब्देन मुग्धीकृतसर्व्वसज्जना
नरेन्द्रसेना मुखरा सुशोभना‡ ॥ ५७ ॥

---

* "His Excellency the Viceroy left the Viceregal Camp at 11-30 A. M. with an escort of one British Cavalry Regiment, the Imperial Cadet Corps, Body-Guard and a Regiment of Native Cavalry. All present rose as the Viceroy entered the arena and remained standing until he had taken his seat. As His Excellency approached the dais, the Guards-of-Honour in front of dais presented arms, the massed bands played the National Anthem and a Royal salute of 31 guns were fired."

† "गीतम्"—The National Anthem. · "All present rose, as the National Anthem was played." (*Vide* notes above.)

‡ नरेन्द्रसेना—The Imperial Cadet Corps. "His Excellency drove into the Amphitheatre accompanied by the Cadet Corps and the Body-Guard, the remainder of the escort formed outside the arena." प्राकृतमण्डपाध्वना—By the front-door.

पुरश्च पश्चान्नृपपुत्रसेना
दण्डायमानाऽत्र बभौ सुमाना ।
इंराजिवाद्यान्यपि तेन तेन
नेदुः सहस्रद्वयवादकेन * ॥ ५८ ॥

दृष्ट्वाचैव च राजपुत्रपृतनामुच्चैः प्रफुल्लाननां
ज्योतिःस्फुर्त्तिकदम्बितामसिलतामङ्के दधानां चलाम् ।
सर्व्वे हर्षजयध्वनिं विदधिरे तस्मिन् सदःस्था जनाः†
साहेबा अपि यत्र सुष्ठुवदना जाताः सहर्षा इव ॥ ५९ ॥

सर्व्वे कृष्णतुरङ्गमे धवलितव्याघ्रत्वगाच्छासने
ते ते राजकुमारसैनिकगणा मानात् स्वतन्त्रासनाः ।
श्वेताङ्गावरणे सुवर्णकुसुमं, मौलौ नभोवर्णजित्-
सूष्णीषञ्च, तथा हिरण्यकवचं रेजुर्दधानास्तदा‡ ॥ ६० ॥
(युग्मकम् ।)

---

* "The massed military bands, European and Native, exceed 2,000 performers."

† "The Imperial Cadets received an ovation as they swung into their places *behind* the Viceregal and Royal party." "This beautifully mounted Corps with picturesque uniforms and blue turbans made a splendid picture, every trooper was of the Royal blood of India and they rode like princes."

‡ स्वतन्त्रासनाः:—They were provided with seats just *behind* the Viceroy and the Duke. व्याघ्रत्वगाच्छासने—*i.e.* Their Saddle-cloth of snow-leopard skin.

अधिष्ठिते राज्ञि सभान्तराले*
नरेन्द्रवृन्देन समं विशाले ।
सैन्यैरशून्यं प्रबभूव सर्व्वं†
भिन्दद्रिपूणां हृदयस्य गर्व्वम् ॥ ६१ ॥

द्वे तत्र विद्युल्ललतिकानुमाने
सुवर्णवेणीपरिदृश्यमाने ।
भ्रातुर्नरेन्द्रस्य च, कार्ज्जनस्य
लेड्यौ निषस्ने दृशि ते न कस्य ?‡ ॥ ६२ ॥

प्रतिप्रणामे रचिते प्रणामे§
लेडीद्वयं भर्त्तुरभूच्च वामे ।
पुनश्च तोपध्वनिरुज्जगर्ज्ज
नैकं नृणां कर्णमसौ ववर्ज्ज ॥ ६३ ॥

सार् वार्णस् परकीयराष्ट्रसचिवो राजानुमत्या ततः
सङ्केतं स चकार कर्णमधुरैर्वाद्यैर्नकीबं प्रति ।

---

* श्रीमती राजप्रतिनिधेः सिंहासनोपवेशनमिदानीमुल्लिख्यते । (*Vide* also note under stanza 54.) "His Excellency, then, ascended the steps and took his seat on the throne, and the spectators resumed their seats."

† "A guard-of-Honour of British *troops* was drawn up *within* the Amphitheatre, in front of dais."

‡ लेड्यौ—भार्य्याविशेषौ; *i.e.* Lady Curzon and Duchess of Connaught.

§ "Lady Curzon courtesied to the Duchess before taking her seat." इत्यो वर्ण्यते, रीत्यादिकोऽयम् ।

तद्वाद्यञ्च निशम्य वादकगणो वाद्येन तस्योत्तरं
दत्त्वा चैव जगर्ज्ज वाद्यमुखरः कुर्व्वन् प्रतीच्चाञ्च सः * ॥६४॥
सङ्केतेन च तेन सोऽपि च नकीब् तत्कालवेशोज्ज्वलः
षड्भिर्लण्डनभारतीयमनुजैस्तत्रागतो द्रागभूत् ।
आश्चर्य्या खलु सा प्रवेशघटना तद्वादकानां नृणा-
मेको दच्चिणतो दिशस्तदितरो भागोऽविशद्वामतः† ॥ ६५ ॥
(युग्मकम् ।)

तस्मिन् वाद्यमगद्यमुच्छ्रितमभूद्यद्यौगपद्यं पुन-
र्ब्रह्माण्डं समकम्पयत्, तदिव तत्, कुत्रोपमा तस्य वै ? ।
एकत्रिंशदभूद्ध्वनिर्नलमुखात्, दिङ्मेदिनी कम्पिता
लोकानाञ्च कुतूहलं कलकलस्तैस्तै रवैर्भैरवैः‡ ॥ ६६ ॥

---

* अधुना दरबारस्य कार्य्यारम्भः (Opening of Durbar) कथ्यते (६४–६८) । "At the conclusion of the salute, the Foreign Secretary, with His Excellency's permission, opened the Durbar. The *bands* within the arena then sounded a summons to the Herald. The Herald with the Trumpeters *replied* with a flourish of trumpets." नकीब्—इति भाषा ; *i.e.* the Herald (Major Maxwell). वादकगणः—*i.e.* The Trumpeters (*vide* next stanza). सार् बार्णस्—Sir Hugh Barness. सः—सभाप्रवेशद्वारि स्थितः वादकगण इति यावत् ।

† "The Herald, with the Trumpeters accompanying him, *replied* with a flourish of trumpets and *rode up to* the Amphitheatre." "The Trumpeters were 6 European and 6 Indian." तद्वादकानां नृणाम् (*i.e.* of the Trumpeters) एको भागः अंशः दच्चिणदिशा, अपरः वामदिशा सभास्थलं विवेश इत्यर्थः ।

‡ "They then rode to the front of the Viceregal dais, formed up and sounded another flourish." "The proud fanfire of trumpets sounded clearly and sharply."

"हिप् हिप् हुर्‌रे"ध्वनिरिति तदानन्दतः प्रादुरासी*-
देकत्रिंशद्रवसहचरो वाद्यभाण्डैरतीव ।
जातश्चोच्चैर्ध्वनिरपि नृणाम्—"एडवार्ड-राज्यमेतत्"—
वंशप्रोथादिकमपि तथा राजकृत्यञ्च वृत्तम् ॥ ६७ ॥

कर्णौ वर्णीयमाना सकलजनमनःशान्तिरूपायमाणा
सर्व्वस्याराविराशेरुपरि सुमधुराध्मानवीणायमाना ।
तापे धारायमाणाऽमृतरसनिचये राजभिः स्तूयमाना
कण्ठैरुद्गीयमाना स्म जयति नृपतेर्घोषणा पठ्यमाना† ॥६८॥

उत्तोल्य हस्तं नरराजराजे
दत्ते शुभाशीर्वचनं समाजे ।
तोपध्वनिर्द्राक् पुनरेव जातः
पुनर्बभौ सैन्यगणोऽपि भातः‡ ॥ ६९ ॥

---

* "The rattle of musketry from the troops outside, the fine rendering by the massed bands of the National Anthem, and the cheering of the troops were effective points in the magnificient ceremonial."

† "The *Proclamation* rang out so that it could be heard in every part of the arena. It announced the coronation of the King-Emperor, that the event should be made known to India and celebrated at the present Durbar."

‡ राजकीयघोषणासमये ध्वजोत्तोलनादिकं कृत्यजातं चतुर्भिः कथयति (६९–७२)। "When the Proclamation has been read, the Royal *Standard* was hoisted on the flag-staff in the centre of the Amphitheatre, the massed bands within the arena played the *National Anthem*, and all the spectators instantly *rose* from their seats." "And after this, an Imperial *salute* of 101 guns was fired."

परं तस्मिन् पश्चात् सदसि रचिते लोकखचिते
बभौ वंशीनादो मधुरमधुरं नादितपुरः।
निनादे सर्व्वेषां श्रवणपुटगे तत्र च मह-
त्यभून्नृत्यं हृत्यं नरचरणयोस्तत्क्षणदृशे * ॥ ७० ॥
तस्मिन्नेव सदस्यधिष्ठितनृणामारात्समागात् शनैः
श्रोत्रे सूक्तमवाद्यमेकमपरं नेत्राज्जलं पातयन्।
पश्चात्तत्र जने च संसदि पुरा सम्माननाभ्युत्थिते
कुर्व्वंश्चोन्मनसं जनं घनमभूद्राजध्वजश्चोच्छ्रितः ॥७१॥
नृपस्तम्भस्यासौ ध्वजपटपताकादिखचितो
यदग्रे दाम्पत्यप्रणयमिलितौ द्वौ खगपती।
नमन्तः सर्व्वे तं प्रतिनिधिरयञ्चापि नृपते-
र्विम्हष्येनं भक्त्या नयनकुसुमैरागतजनाः ॥ ७२ ॥
निषण्णौ सर्व्वेषामुपरि कनकाङ्कासनवरे
पृथक् लेडीभ्यान्तौ कनडथ स राजप्रतिनिधिः।
प्रसन्नाभ्यां दृग्भ्यां कृतनृपतिमानाववचनौ
स्फुरन्मानोन्नत्या नमितनृपतीन् नेमतुरिमौ† ॥ ७३ ॥

---

* तत्क्षणदृशे—तन्महोत्सवदर्शनार्थम्। क्षणः—उत्सवः।

† अधुना चतुर्भिः भारतीयनृपतीनामभ्यर्थनप्रथा कथ्यते (७३–७६)। "The Foreign Secretary having asked permission to present the Ruling Chiefs present at the Durbar, the Chiefs in the order previously arranged, advanced to the

प्रणामार्घ्यैन्यासैर्नृपतिसुहृगीत्वाम्बुजदलैः
कथापाद्यैर्वाद्यैर्मनुजकरतालीध्वनिघृतैः ।
कनट् भ्राता राज्ञः, प्रतिनिधिरयं कार्ज्जन इह,
प्रहृष्टावीतुष्टौ सदसि मुमुदाते* नरपतीन् ॥ ७४ ॥

दत्तार्घ्यसत्कृतिवरे च नृपार्घ्यवंशे
का खल्वसम्भवकथा सकलावतंसे ? ।
सिंहः स एव गजमूर्द्ध्नि विहारकारी
तत्राक्षमः खरपतिः कटुशब्दधारी† ॥ ७५ ॥

त एते मानार्हाः क्षितिपतिपतेर्मानमुदगुः
पृथक् क्लृप्तं चार्व्वासनमुपययुर्भूपतिगणाः ।
अहो साहेबानां प्रकृतिरुपकारप्रसविनी
न याऽन्येषां तुल्या जनकुशलकुल्या विजयते‡ ॥ ७६ ॥

तस्मिन् सद्मनि गद्यवाग्भिरुद्भूत्वा वक्तृतारूपिणी
कर्णे कर्णरसायनं मधुमयी धारा ततः कार्ज्जनी ।

---

front of the dais in turn and briefly offered their congratulations to His Majesty the King-Emperor, through His Excellency the Viceroy who, with His Royal Highness the Duke of Connaught received them standing." "The total number of Chiefs presented was 98."

* मुमुदाते—णिजन्तगर्भोऽयं धातुः । "अकर्म्मकोऽपि क्रियान्तरान्तर्भावे सकर्म्मकः स्यात्" इति क्रमदीश्वरः ।

† तत्र—गजमूर्द्ध्नि विहारव्यापारे इत्यर्थः ।

‡ साहेबानाम्—भाषाशब्दोऽयं, *i.e.* Of the English. या—प्रकृतिरिति यावत् ।

यां श्रोतुञ्च सुदूरतोऽपि सहसा नाहूतानिताहूतानिता
दूरादेत्य पिपीलिकेव जनता लग्ना च मग्ना बभौ* ॥७७॥

सारांशो नृपतेर्गिरामयमभूत् शृण्वन्तु सर्व्वे जनाः
सत्यं मङ्गलपर्व्व तत्प्रतिनिधेरद्याप्यगद्यं ब्रुवे ।
अस्मिन् पर्व्वणि राजभक्तिविदुषां काले जनानां मुदा
हर्षद्योतनकृत् जगत्युपकृतिर्भव्येति नात्र द्विधा† ॥ ७८ ॥

"लब्ध्वाज्ञां वणिजां गणाः कतिपये प्रागेलिजाबेथ्-मुखात्‡
वाणिज्योन्नतितो धनार्थमधिकं भ्रेमुश्च भूभारतम् ।
इंराजा मिलिता मनोरथरथे सच्चेष्टया सत्पथे
लक्ष्मीमेकनृपाङ्कगां विदधिरे कृत्वान्यहस्ताच्चुरताम् ॥ ७९ ॥

"लक्ष्यीकृत्य वने वने मृगपथं भ्रेमुश्च ये रेमिरे
सर्व्वाङ्गे तिलकं तथा वनलतां कर्णौ वहन्तः प्रियाम्§ ।

---

* अधुना दरबारगृहे प्रदत्ता नृपप्रतिनिधिर्वक्तृता उल्लिख्यते (७७–८८) । "As the flourish concluded, His Excellency the Viceroy rose and *addressed* the Durbar." "The Viceroy's speech was a magnificient effort and was listened to with attention throughout, broken only by cheers and applause. In the course of it he read a gracious message from His Majesty, declaring the King-Emperor's intention to follow in the footsteps of the Late Queen."
नाहूतानितेत्यादि—नञर्थस्य 'न'शब्दस्य सुप्सुपेति समासः, नञ्समासे तु नलोपः स्यात् ।

† भव्या—"भव्यगेये"त्यादिना कर्त्तरि निपातः । ब्रुवे—अहं वच्मि इत्यर्थः ।

‡ एलिजाबेथ्—Queen Elizabeth. (*Vide* author's "Vijayiní-kávyam.")

§ "To be Emperor of India is a noble title, for powerful empires extended and flourished *here*, while Englishmen were still wandering *painted in the woods* and when the British colonies were in the wilderness and jungles." (This extract has been taken from the Viceroy's speech at the State-Banquet at Delhi.)

दैवादेव च किञ्चिदुन्नतिमुपालभ्यार्द्धसभ्यास्ततः
साहेबाः क्रमशः सुसभ्यपदवीमूर्द्ध्नि स्थिताः साम्प्रतम् ॥ ८० ॥
"सभ्यत्वस्य च तस्य दिग्दिशि गतं मूलं न विज्ञायते,
स्थूलं यच्च पुनः पुनः परिचितं दिष्ट्याद्य तन्मामितम् ।
किं तत् ? भारत*"मित्यधिष्ठितनृणां कर्णोऽर्द्धमाचध्वनौ
हर्षादाकुलिता सभा समभवत् दत्त्वा करे तालिकाम् ॥ ८१ ॥
"द्रव्यैर्दिग्विजयं तनोति विविधैस्तैस्तैर्दुरापैश्च यत्
सम्प्रत्यस्ति च कः क्षितौ बलधरस्तज्जेतुमग्रेसरः ?† ।
तस्यैवास्य च भारतस्य भुवने सर्वोत्तमे गौरवे
किं कुर्य्यादुपकारमस्य नृपतिर्नास्त्येकता चेन्नृणाम् ?‡ ॥८२॥
(युग्मकम् ।)
"याचन्ते भुवि यादृशं नरपतिं राज्ये प्रजा दिग्गजाः
सर्व्वेषामयमस्ति तादृश इति व्याख्यायते केन सः ? ।

---

* भारतमेव तस्य सभ्यत्वस्य मूलं, यदिदमद्यासाक्षात्कृतमित्यर्थः ।

† "Amid the crowd of noble suitors who through all the centuries have sought the hand of India, she has given it only to the *one* who has also gained her trust." 'यत्'—भारतमिति यावत् ।

‡ "It is difficult to give to them *more* than they already enjoy and *add to* a security whose inviolability is beyond dispute." इंराजैर्भारतस्य विविधानि हितानि सम्पादितान्येव, नास्ति कियदवशिष्टम् । यूयं सम्प्रति मिथो मिलिता भवन्तु इति तात्पर्य्यार्थः । "एकता नास्ति चेन्नृणाम्"—Compare what the Viceroy said on another occasion :—"The one thing that holds us *together* is loyalty to a *common head,* membership of the same body-politic and *fellow-citizenship of the same empire.*"

दृष्टोऽस्त्वस्करतश्च यत्तुपटलात् यूयं समारक्षिता *
यं सम्प्राप्य बिभेति कोऽपि न पुनः कुत्रापि कस्मादपि ॥८३॥
"इंग्राजा मिलमेते, तदिदमपि च वः साम्प्रतं भाग्यचिह्नं,
नैराजेभ्योऽपि चान्ये ध्रुवमिति वचनं लालकाः पालका वा† ।
अन्ये जानन्ति किन्तत् परनृपकरगाः साम्प्रतं ये न सन्तः ?
ते ते जानन्ति तत्तत्कुजननृपकरे भुक्तभोगाश्च ये ये ॥ ८४ ॥
"नरेन्द्रभक्ता भुवि भारतौकसो
विसारि येषां परितोऽस्ति तद्यशः ।
सदोर्वरा शस्यवती च मृत्तिका
मह्निमिवुयेंयमुदग्रकीर्त्तिका‡ ॥ ८५ ॥
"धन्यः स एव भुवने किल भाग्यभाजां
शक्तो भवेत् स्थिरयितुं स च राजलक्ष्मीम् ।

---

* "To the majority of these millions, the King's government has given freedom from invasion and anarchy."

† "Under no other conditions can this future be realised than the unchallenged supremacy of the Paramount Power, and under *no other* controlling authority is this capable of being maintained than that of the British Crown."

‡ "Rich in her ancient traditions, India is also rich in the *loyalty* which has been kindled anew in her by the West."

यस्यानुरागवशगा भुवि भारती भू-
र्यस्य प्रजाः समुदिता मुदिताश्च यूयम्* ॥ ८६ ॥
"हितेभ्यो वर्त्तन्ते यदि च भवतां राजपुरुषा-
स्तथाप्युच्चैरन्यद्धितमिह समुद्बुध्यत इति ।
ऋणत्वेनादत्तं द्रविणविधिना यन्नृपकुलै-
र्न गृह्णीमस्तेभ्यो द्रविणमथ तत् त्रिर्वत समाः† ॥ ८७ ॥
"श्रद्धानन्दमयीक्षते च विधिवच्छान्त्यादिकान्त्युज्ज्वले
सौराज्यायति भारते सुनियमैः सद्राजयोगेन च ।
काले चाभ्युदयः समुन्नततरो युष्माकमुद्वीक्ष्यते‡
भूयादेव च राजकीर्त्तिरमला नित्यं चिरस्थायिनी" ॥ ८८ ॥

---

* "To have won such a dominion is a great achievement, to wield it by prudent statesmanship into a single and compact whole will be and is the greatest of all."

† "It is difficult to give to the princes of India more than they already enjoy, * * * nevertheless it has been a pleasure to us to propose that Government shall cease to exact any interest for a period of three years upon all loans that have been made to the Native States." द्रविण—*i.e.* Interest. आदत्तम्—ग्रहीतमित्यर्थः ।

‡ "If we turn our gaze to the future, a great developement appears with little doubt to lie before this country." "The India of the future will under Providence be one of expanding industry, of awakened faculties, of increasing prosperity."—*Extracts from the Viceroy's Address to the Durbar.*

एषा कार्ज्जनवक्तृता जनमनःसंलग्नभावं गता
यामेनां न च विस्मरिष्यति जनो यावद्वयस्तिष्ठति ।
कृत्वैतन्मधुवृष्टिमुन्नतमतौ भूपे स्थिते कार्ज्जने
धन्यं धन्यमिति प्रहृष्टमनसां स प्रादुरासीद्ध्वनिः * ॥ ८९ ॥

इति मुदेश्वरतो जयमङ्गलं
नरपतेश्चक्रमे विलसद्बलम् ।
जनगणाश्च शनैस्तदनन्तरं
निजनिवासमियाय सुखाकरम् ॥ ९० ॥

इति श्रीश्रीश्वरीये दिल्लिमहोत्सवे खण्डकाव्ये
सभामण्डप-राजघोषणादिवर्णनो
नाम तृतीयः सर्गः ।

---

* "The Viceroy's speech was dignified, full of significance and worthy of the great occasion."





# चतुर्थः सर्गः ।

एषा दिल्ली खचरनगरीवोपलप्रावराढ्या
वाह्ये तस्याः स्थपतिकुशलैर्निर्म्मिताट्टालिकैका ।
कक्षाणां या दश विदधती कुद्सियोद्यानभूम्यां
दिग्द्वाराढ्या स्फुरति भुवि खे द्रव्यराज्युज्ज्वलाङ्गी * ॥१॥

काश्मीरद्वारशोभां रचयति वपुषाऽद्यापि योद्यानभूमि-
र्दूराद्दाकाशनीचैः कुसुमशतवती नन्दनोद्यानमेव ।
यामेनां राजराज्ये भणति जनगणो कुद्सिया कुद्सियेति
द्राक्षाम्राम्रातकाद्यैस्तरुभिरतिगुरुर्हट्टवाटीव भाति † ॥ २ ॥

---

* प्रदर्शनीविवरणं प्रस्तूयते ; तत्रादौ प्रदर्शनीगृहवर्णना क्रियते (१—२) । "The Exhibition of Indian Art Manufactures stands in the Kudsia Bagh, 200 yards from the Káśmír gate, and it is a large, white, oblong building measuring 250ft. by 190ft." प्रावरः—प्राचीरः, Enclosure.

† द्राक्षा—Grape ; आम्रातकः—The hog-plum (spondias mangifera).

प्रपश्यतामियमिति शिल्पदर्शनी
मनुष्यत्रौ दशदिवसेऽपुरातनी ।
निरीक्षिता विपदि च हर्षवर्षणी
नृणामभूत् स्मृतिविषयप्रकर्षणी ॥ ३ ॥
धनुःषोड़शाङ्के घटीयन्त्रवाद्ये
तदैकादशे मानुषश्रोत्रखाद्ये ।
अगात् कार्ज्जनोऽसौ स्वयं शिल्पगेहं
पुरासादितद्रव्यसम्पूर्णदेहम् * ॥ ४ ॥
अयाट्-नाम-डाक्तर् तदा तं सुदक्षं
ययाचे च शिल्पालयद्वारमोक्षम् ।
नृणां हस्तताल्या करः सञ्जभम्भे
बृहत्तोपशब्दैर्धरित्री चकम्पे † ॥ ५ ॥
तदागारं पश्यन् प्रतिनिधिरयं लण्डनपते-
र्जगादेमां वाणीमिति भरतराज्योपकृतये ।

---

* ततः राजप्रतिनिधिना प्रदर्शनीद्वारोद्घाटनक्रिया (Opening of the Art Exhibition) वर्ण्यते (४—५)। "The Viceroy accompanied by His Royal Highness the Duke of Connaught arrived at 11-30, December 30th, and opened the Art Exhibition." घटीयन्त्रम्—घटिका, Clock.

† "The exhibits have been got together after infinite pains by the Director Dr. George Watt, who has rightly devoted his energy and care to the essentials of the Exhibition." तोप इति भाषा, नालीकास्त्रम् ।

कियत्तस्यारांशं मम भणितिरेषा कथयितुं
प्रवृत्ता, बुध्यध्वं नरपतिमनः कीदृगपि च* ॥ ६ ॥

"दृष्ट्वा हृष्टोऽस्मि यादृक् विविधमिदमिदं भारतं द्रव्यजातं
तादृङ्नाहं कदापि भुवमिति वचनं भूतपूर्व्वस्य नूनम् ।
आगन्तुर्भारतं मे हृदि च कुसुमिता शिल्पवृद्धेः पुरा या
चिन्ता, सैवात्र तीव्रा रचयति सदिदं पश्यतां शिल्पवेश्म†॥७॥

"अद्याप्याश्चर्य्यविद्या जयति, न च गता, शिल्पवित्पण्डितानाम्
उत्साहादेरभावेऽपि च समयभवे सूर्व्वरे भारतेऽस्मिन् ।
शिल्पानां रङ्गमञ्चः पतितजवनिको दृश्यते कारुकाणां !
सत्युत्साहे प्रवृत्ते किमधिकवचसा नान्यजेया भवेयुः‡ ॥ ८ ॥

"यावत्प्राप्ता§ भरतपरिषत् तावदेवान्तरे मे
सङ्कल्पोऽभूद्धृदि परिदृतः शिल्पविद्योन्नतिभ्यः ।

---

* प्रदर्शनीद्वारोद्घाटनकाले राजप्रतिनिधिप्रदत्ता वक्तृता समुल्लिख्यते (७—१९) ।

† भारतवर्षमागतस्य मे हृदि चस्य शिल्पोन्नत्यै या चिन्ता समुदिता पुरा, सैवेतत् शिल्पभवननिर्म्माणस्य मूलमित्यर्थः । आदौ कुसुमोद्गमः, पश्चात्फलप्रसव इति नियमः ।

‡ "In most Indian towns and in many Indian villages, there still exist the artificers who can satisfy the artistic as well as the utilitarian taste of their countrymen, and for the beautification of an Indian house or the furniture there is no need to rush into the European shows." नान्यजेयेत्यादि—ते कारुकाः (Artificers) अन्यदेशीयैः शिल्पिभिर्विजेतुमशक्या भवेयुरित्यर्थः । रङ्गमञ्च इत्यादि—The figure is taken from the theatrical stage. न च गता—न विनष्टेत्यर्थः ।

§ प्राप्ता—अधिगता, मयेति यावत् ।

येषां नष्टं न नवरचनेऽखण्डपाण्डित्यमुच्चै-
स्तेऽद्याप्यस्मिन् कृतिसुनिपुणाः सर्व्वदेशं जयन्ति* ॥ ९ ॥

"प्रायः सर्व्वे समयसलिलस्रोतसा नीयमाना-
धावन्तः सन्त्यनुकृतिपथे शिल्पिनो लण्डनादेः ।
यन्त्रावल्या रय इह पुनः साम्प्रतं दुर्निवार्य्यो
नास्त्युत्साहः प्रतिदिनमतः क्षीयते हस्तकार्य्यम्† ॥ १० ॥

"अनुकृतिरुपकारं कं विधत्ते परेषां ?
तुदति विघटयेद्या गौरवं देशजातम् !‡ ।
अपि कियदुपकारे द्रव्यसन्दर्शनीयं
यदि भवति, तदा मच्चेष्टितं मोदयेन्माम् ॥ ११ ॥

"अन्यस्मान्नीहृतोऽस्मिन्न पुनरुपहृतं द्रव्यजातं गिरा मे
द्रव्येणोच्चप्रयत्नैः कृतमभिकमलं भारतीयेन वेश्म§ ।

---

* "Ever since I have been in India, I have made a careful study of the industries and handicrafts of this country and I have lamented their progressive deterioration and decline." ते कृति-सुनिपुणाः – ते भारतीयशिल्पिनः इत्यर्थः । विशेषणेनैवार्थप्रतिपत्तौ न विशेष्यप्रयोगः । अस्मिन्—भारते इति यावत् ।

† यन्त्रावल्या रयः—यन्त्रसमूहस्य वेगः प्रसरः इति यावत्, दुर्निवार्य्यः सम्प्रति । यन्त्रावली—Machinery ; हस्तकार्य्यम्—Manual industries.

‡ "No national art is capable of continued existence, unless it satisfies and expresses the wants of the *nation that has produced it.*" "Indian art will never be revived by *borrowing foreign* ideals, but only by fidelity to its *own.*" या—अनुकृतिरिति यावत् ।

§ I laid down that I wanted only the work that represented India, and its traditions, and the instincts and beliefs of the people." वेश्म—इदं शिल्पागारम् ।

सर्व्वे पश्यन्तु शोभां पुनरपि महतीं भारतीयाञ्च कीर्त्तिं*
यामिच्छामो वयञ्च स्थिरयितुमसकृत्स्वार्थतोऽन्यार्थतो वा॥१२

"सार् ओयाट् अप्यहञ्च इयमिह निपुणं यत्प्रयोगेष्वतिष्ठत्†
पर्ज्वण्यस्मिन् सुयोगे वङ्कलनरपतौ दर्शिता दर्शनीयम् ।
उत्साहायात्यमस्मिन् स्फुरति नवनवं भारतीयं सुशिल्पं‡
बभ्रन्तन्येश्च सार्द्धं परिकरमसकृत्तत्स्थिरत्वे चितीशाः ! ॥१३॥

"यन्त्रैर्हस्तः परास्तः कतिपयशरदः स्यास्यतीत्येव यन्त्रं
कालोद्भूतञ्च यत्स्यात् विरमति न च तत्,कः चमस्तन्निरोधे?
जापाना भारताद्या यदनुकृतिविधौ साम्प्रतं सन्निषस्त्राः
प्रोज्झित्यात्मप्रदेशोद्भवनवरचनामन्यसृष्टिं भजन्ते !§ ॥ १४ ॥

---

* "To show to the world of what India is still capable and, if possible, to arrest the process of decay." "It is meant to show what India can still imagine, create or do."

† "I accordingly sent for Dr. Watt and I appointed him my right hand for the purpose. यत्प्रयोगेषु—शिल्पकीर्त्तिप्रयोगेषु, शिल्पकीर्त्तिसंरचणार्थेमित्यर्थः । "अतिष्ठत्" इत्येतत्क्रियापदस्य कर्त्तृपदं "इय"मित्येतत्पदम् । वयम्=*i.e.* Dr. Watt and myself.

‡ "When it was settled that we were to hold this great gathering at Delhi, at which there would be assembled representatives of every province and state in India, it struck me that here at least was the long sought opportunity of doing something to resuscitate these threatened handicrafts." दर्शनी—*i.e.* प्रदर्शनी ।

§ "We are witnessing in India only one aspect of a process that.........is rapidly extinguishing the *manual* industries of China and Japan. Nothing can stop it. The *power-loom* will drive out the *hand-loom*." कतिपयशरदः—कतिपयवर्षान् व्याप्य इत्यर्थः । अन्यसृष्टिं—परदेशोत्पद्रव्यजातमित्यर्थः ।

“विद्युत्पङ्खो जयति समये हस्तसम्भूतपङ्खं
दोस्तन्त्रञ्चानमति शिरसा यन्त्रतन्त्रं समन्तात्।
विद्युद्यानैस्तुरगशकटं जीयते क्षीयते वा
कालस्रोतः शतमुखमिदं कः क्षमस्तद्विजेतुम्?* ॥ १५ ॥

“पाश्चात्त्येऽत्र शिल्पजाते रचयति हृदयान्युत्तमे न्यस्तदृष्टि-
र्मन्दामन्देषु नैवं रचयति न, पुनर्वीक्षते चाल्पमूल्यम्।
द्रव्याणां फल्गुकानां भरतभुवि जनो मोहितश्चाकचिक्यैः
कस्मात्प्राचीनशिल्पं नवभवसमये प्राप्नुयाद्दीर्घमायुः?† ॥१६॥

“इंलण्डानामिदानीं नवनवविधिना वर्द्धिते यन्त्रकार्य्ये
दोःस्तम्भो जात एव ध्रुवमिति गणितं तैस्तु तन्नेति मन्ये‡।
तादृश्यां तद्दशायामहह! समयतः का कथा भारतानां?
वैलास्यं येषु सम्यक् विलसति सततं, हा! दरिद्रा च मुद्रा!॥१७

---

* “The hand-pulled punkha is being replaced by the electric fan and the steam-car is advancing.” “All that is inevitable.” दोस्तन्त्रम्—Hand-loom; तन्त्रं—तांत् इति भाषा। विद्युत्पङ्खः—Electric fan.

† “And in an age which wants things *cheap* and does not mind their being *ugly* and which is never happy unless it is *deserting* its own models and running about in quest of something *foreign* and strange, we may be certain that a great many of the old arts and handicrafts are doomed.” फल्गुकानाम्—तुच्छानाम्।

‡ इंलण्डानाम्—इंलण्डदेशीयजनानाम्। दोःस्तम्भो जातः—Handicrafts have been doomed. तैः—भारतवर्षवासिभिरित्यर्थः।

"हा ! लोका बहवो विदेशगतपयस्ते ते नृपा वालिशाः
क्षीणान्येव धनव्ययात्परकरात् द्रव्यञ्च येऽभ्यागतम् ।
अस्थाने बत ! ह्रापयन्ति धनिनो मुद्रां व्ययस्रोतसा
यस्याः सञ्चयने, विदन्ति न च तत्, किं दुर्लभं भूतले * ॥१८॥
"क्षीणापि प्रबलायते बहुगुणा सभ्या च भूरुर्व्वरा
नानाजातिविजातिजातमनुजान् पुष्णाति या लीलया ।
उत्साहं यदि किञ्चिदद्य लभते सा छिन्नभिन्ना, पुन-
र्नूनं पूर्व्ववदेव चाशु भविता, सत्योक्तिरेषा हि नः"† ॥१९॥
इत्युक्ता विरते नरेन्द्रमुकुटे राज्यौषधे कार्ज्जने
धन्यो धन्य इति ध्वनिः करयुगात्तालो मुदाऽप्युद्बभौ‡ ।
'चित्तं यस्य विभाति भारतहिते तद्भक्तता तादृशी-'
त्याभाष्येव जनाः स्थिताः कतिपये केचिच्च गेहं गताः ॥ २० ॥
आश्चर्य्या गेहशोभा स्वपतिमतिकृता दन्तिदन्तादिजातै-
र्द्रव्यैस्तैस्तैरुदारैर्विरचितरचना दारवैः कारवैश्च ।

* "If Indian art is to flourish, it can only be if the Indian chiefs and aristocracy undertake to patronise it. So long as they prefer to fill their palaces with flaming Brussels-carpets, with Tottenham Court Road-furniture,......I fear there is not much hope."

† "All they want a little stimulus and encouragement." सभ्या च भूः—इयं भारतभूमिरिति यावत् ।

‡ "The speech was punctuated at intervals by bursts of applause, specially when Lord Curzon spoke of......the folly of the wealthy Indians neglecting arts of their own people." गेहं गताः—सदर्शनोत्सवस्थानादितरं गता इत्यर्थः ।

धातुद्रव्यं पुरस्तात् तदनु गुरुतरा हीरकाद्यादिभूषा
काचानां मृत्तिकानां पुनरपि दृषदां भाण्डजातानि तानि* ॥२१॥
त्वग्भाण्डं शङ्खशृङ्गप्रभृति बहुविधं गिल्टिकाख्यातमन्यत्
सौची चैवापि नानाकुसुमितलतिकास्पर्द्धया चित्रितेव ।
गेहं वा पर्व्वतो वा किमिदमिति तदा पश्यतां भ्रान्तिरासीत्
विभ्रद्भावण्यमन्यत् फलकुसुमयुतः किं नु कल्पद्रुमो वा ! ॥२२॥
बभुश्चेष्टावन्तो मणिगणपरीक्षासु कुशला-
गणेशा लालान्ता इह परशुरामप्रभृतयः ।
तथा ताराचन्द्रोऽपि च जहुरिसंज्ञः सहचरै-
रमीषां सर्व्वेषां भुवनविदिताग्रेव वसतिः† ॥ २३ ॥

---

* सम्प्रति प्रदर्शनीगृहे स्थापितानां विविधानां शिल्पद्रव्याणां वर्णनं प्रक्रियते । तत्रादौ साम्यां द्रव्याणां श्रेणीविभागः नामोल्लेखश्च क्रियते (२१-२२)। "The division is into 10 main classes: We have in Class I. Metal-wares and Ornaments; Class II. Stone, Glass, Earthenwares; Class III. Wood-work; Class IV. Animal Products:—Ivory, Horn, Shell, Leather; Class V. Lac, Lacquer; Class VI. Textiles; Class VII. Dying and Printing; Class VIII. Embroidery, Braiding and Lace; Class IX. Carpets, Rugs, &c.; Class X. Fine Arts, *e. g.* Sculpture, Painting, Book-illustration. Each class has numerous subdivisions."—*Watt's Delhi Exhibition.*

† These three stanzas (23-25) speak of the "Jewellery-Court" arranged to allow of a selection of Indian Jewllers to display *in person* specimens of their best work." जहुरिः—इति भाषा, Jewellers. The list of selected Jewellers is:—Messrs. Ganeshlál and Sons of Agra, Messrs. Táráchánd Parashrám, Messrs. P. Orr and Sons of Madras, Badareedás Rái Báhádoor of Calcutta, Messrs. Motilál Dayábhái & Co. of Bombay, Sugamchánd and Subhagachánd of Jeypur, and others. आग्रा—Agra.

पि. यर्. ब्याड् सन्साद्या विपणिनिपुणास्ते जङ्करयो
जगत्यस्मिन् ख्याता जनसदसि राजप्रतिनिधेः ।
जना बाहादूराः कति च बदरीदाससहिताः
समेता मान्द्राजात् नवविपणिसज्जामरचयन् ॥ २४ ॥
अभूत्तस्मिन् गेहे सुमतिमतिलालस्य जङ्करि-
र्दयाभायी ख्याता विपणिभुवि बम्बानगरतः ।
अभूतां रत्नानां सुगमसुभगौ द्वौ च जङ्करी
निषेवाते पण्यं कृतमिदमरण्यं जयपुरात्* ॥ २५ ॥
तदागारे द्वारे विलसदुपचारे निशि दिवा
दृषद्गौरीमूर्त्तिः परमरमणीया विरुरुचे ।
न तादृक्सौन्दर्य्यं नृदृशि मुकुरे बिम्बितमभूत्
शिरोरत्नं कीर्त्तेर्जयति यदिदं शिल्पविदुषाम्† ॥ २६ ॥
एका तत्र च बालवत्ससहिता मूर्त्तिर्गवी सुन्दरी‡
शुक्ला सा च दृषन्मयी च ददृशे तन्मन्दिरान्तर्जनैः ।

---

* बम्बा—Bombay, जयपुर—Jeypur.

† पाषाणनिर्म्मितद्रव्याणां विवरणं ददाति (२६—३२)। These stanzas (26–32) refer to the *Stone-ware Exhibits* that are found preserved in the Main or Sales Gallary and in the Loan Collection Gallery. जयतीति कालनिरपेक्षतया वर्त्तमाने प्रयोगः ।

‡ "The Jeypur and Jodhpur marble idols, figures &c. are worthy of study, and amongst the latter a large model of a cow and calf is specially commendable."

वाटी-थाल-रिकाबमित्यभिहितान्यन्यानि चित्राणि च*
द्रव्याणीक्षणतश्च यानि सहसा निघ्नन्ति चक्षुर्गतिम् ॥ २७ ॥
अस्मिन् प्रस्तरबुद्धमूर्त्तिरपरा, सा प्रेक्षणीया पुनः
तैस्तैर्द्रव्यवरैर्हषद्भिरचितैः सा वीक्षिता सम्भ्रमौ ।
मर्म्मर-प्रस्तरमूर्त्तिचारुघटने विख्यातसुख्यातिका
नान्ये सन्ति सुशिल्पिनो जयपुरात्ते यादृशास्तादृशाः ॥ २८ ॥
आश्चर्य्या भुवि बुद्धमूर्त्तिरियमप्यत्युत्तमाऽमानवी
शिल्पागारमलङ्कृतं खलु यया तज्जातया सुश्रिया ।
ईषद्ध्यानपरायणा सवसना क्लृप्ते च पद्मासने
यां संवीक्ष्य च कोऽत्र शुष्कहृदया भक्त्याऽगमन्नार्द्रताम् ?†॥२९
(युग्मकम् ।)
भूम्यां ताजमहालमित्यभिधयाप्युद्ग्रीवकर्णञ्च यत्
पाषाणेन तदत्र निर्म्मितमभूत् सन्मन्दिरं मन्दिरे ।
यत्सौन्दर्य्यविलोकनेन जनता जाता पुरा स्तम्भिता
तद्वत्तत्र समीक्ष्य विस्मयरसाक्रान्ता न के वाऽभवन् ?‡ ॥३०॥

---

* "In the section devoted to jade and purbec marble will be found a series of cups and saucers of exquisite workmanship and finish." वाटी-थाल-रिकावेत्यादयः भाषाशब्दाः—Cups, plates, saucers &c. &c.

† हषन्निर्म्मिता बुद्धमूर्त्तिर्वर्णिता द्वाभ्याम् (२८-२९) ।

‡ "The alabaster model of the *Taj of Agra* is much admired." This was made by a Delhi-artist.

पौष्यं भाण्डमदर्शि तत्र च पुनर्गोयालियर्भूमितो
वर्णैश्चित्रविचित्रितं मुकुरवत्स्वच्छं प्रभाभासुरम् ।
नानाधातुविभक्तिभाण्डरचनातात्पर्य्यचूड़ामणे-
स्तद्गेहस्य कथैव कैकमुखतो वक्तुर्विनिष्पद्यते ?* ॥ ३१ ॥

आग्रातश्चतुरङ्गखेलनगृहं द्वात्रिंशता कोष्ठकै-
र्व्याप्तं तप्तसुवर्णभादिघटितैः सर्व्वाङ्गगौरास्तृति ।
बालक्रीड़नपुत्तलानि च पुनर्नानाविधैर्वर्णकै-
रानीतानि च तत्र चारुसदने कोष्ठश्च यैर्दीपितः† ॥ ३२ ॥

काश्मीराद्भरिभाण्डं प्रकटितमभवत् ताम्रधातोस्त्रपोश्च
प्राज्यैस्तत्रैव तुम्बीसदृशगलधरैस्तत्फलस्थूलगर्भैः ।
कुम्भैः संख्यामतीतैरपि लसदमृतप्राशनारम्भपात्रै-
र्द्रव्यैस्तैस्तैर्विचित्रैरथ नवरचितैः सोऽथ पूर्णः प्रकोष्ठः‡ ॥३३॥

---

* "The Gwalior *flower-vases* and other articles made of Sand-stone are very excellent." तद्गेहस्य—प्रदर्शनीगृहस्य ।

† This stanza speaks of the Chess-table from Agra, 32 compartments of which were all of white stone. कोष्ठः—प्रकोष्ठः, room.

‡ विविध-धातव-पात्राणां विवरणं ददाति (३३—४०) । These stanzas refer to the *metal-wares* preserved in the Sales Gallery and the Loan Collection Gallery. "There will be found three well-marked forms of *ornamentation* in the *tinned copper* of Káśmír and Peshwar, such as the designs of rosettes spirally arranged on a black back-ground. Of enamelled and *niello-wares*, from Káśmír has come a large assortment of copper and brass enamels and a smaller and finer series of *silver*, The designs are the Shawl and the modern plane-leaf and

ब्रह्मेत्याख्यातदेशाज्जनपदजनतो राजतं पात्रमेकं
वाटीत्याख्याप्रसिद्धं स्वसितजनगणे सङ्गतं तव गेहे ।
यस्मिन् नानाविचित्राः कुशलकृतिकृता मूर्त्तयः सन्निविष्टाः
काष्ठां यच्चारुकारोः स्पृशति गुणगुरोर्वीक्ष्य यं नाव कृत्वा* ॥ ३४

थालादिनाम्नी कनकस्य पात्री
श्यथ्येव सा किं स्वपतां सुगात्री ? ।
यत्रोपधानं रजतादिपात्रं
लौहं कटाहादि तथातिमात्रम्† ॥ ३५ ॥

चूड़ामणे रत्नमपूरुषस्य
भर्तुः सवंशप्रभवस्य तस्य ।
जन्मादिवृत्तान्तशतैश्च चित्रं
व्यलोकि पात्रेषु च तत्प्रविचत्रम्‡ ॥ ३६ ॥

---

rosette." तुम्बी —Long gourd (cucurbita lagenaris), लाउ इति भाषा । तत्फल-स्थूलगर्भैः—तुम्बीफलवत् पृथुमध्यैरित्यर्थः ।

* "A splendid display of *gold and silver* will be found in the Main Gallery. The series from *Burma* are of specially high merit and beauty." काष्ठा—पराकाष्ठाम्, Excellence, superiority. कारुः—Artist.

† "The copper and *brass* wares are *engraved,* etched, *rapoussed* or otherwise ornamented. Copper rapousse of Jeypur are better finished and cheaper." अतिकृष्टाकृतित्वात् "स्वपतां शय्येव सा कनकस्य पात्री"ति उत्प्रेक्षिता । थालं—स्थालम्, Caldron &c.

‡ The *six* stanzas give examples of the ornamented and rapousse works upon the metal-wares mentioned above. षड्भिः श्लोकैः स्थालादिपात्राणां गात्रेषु यानि चित्राणि आसन्, तान्येव कथयतीति द्रष्टव्यम् । उत्तमपूरुषस्येत्यादि—श्रीरामचन्द्रस्येत्यर्थः ।

रामं वीक्ष्य दधाव वक्रविकटा सा ताड़का राक्षसी
हत्वा तां, स्मरवैरिणो दृढ़तरं रामेण भग्नं धनुः।
वैदेहीकरपीड़नात् परतरं रामेण रामार्द्दनं
सर्व्वं तत्र * विचित्रमूर्त्तिभिरभूत्सन्दर्शितं शिल्पिना ॥ ३७ ॥
रामो दण्डकमभ्यगाच्च विपिनं तताज्ञया सीतया
यस्मिन् सूर्पणखा बभावभिमुखी रामे सकामाकृतिः।
निष्प्राणे खरदूषणे, स्वभगिनीं संवीक्ष्य निर्नासिकां
चुक्रोधाथ दशाननो निरशनस्तच्चिन्तयाऽभून्निशि ॥ ३८ ॥
वैदेहीहरणे जटायुमरणे तेनैव सम्पादिते
रामश्चापि वने वनेऽभ्रमदवाक् सीतां समन्वेषयन्।
क्षाराब्धेर्निगड़ं ततः समभवत् लङ्केश्वरस्यागसा
योऽसौ पर्व्वतसंक्रमं हृदि वहत्यद्यापि सोद्यद्ध्वनिः ॥ ३९ ॥
सीतोद्धारमथाकरोत् स भगवान् वंशेन हंसोपमः
कृत्वा रावणकुम्भकर्णनिधनं योऽगादयोध्यां ततः।
एतत्सर्व्वमदर्शयत्प्रतिमया रामस्य रामायणं
तस्मिन् शिल्पिवरो नृविस्मयकरं स्थालीस्थले निर्म्मले ॥ ४० ॥

एवञ्च चित्राण्यथ सर्व्वगात्रे
पात्राणि धृत्वा सदने सुपात्रे।

* तत्र—पूर्व्वोल्लिखितानां स्थालादिपात्राणां गात्रे इत्यर्थः। रामेण रामार्द्दनम्—श्रीरामचन्द्रेण परशुरामार्द्दनम्।

रेजुः पवित्राणि च तानि तानि
त्वया श्रियानीतनवप्रभाणि ॥ ४१ ॥
(षड्भिः कुलकम् ।)

बुलन्दनगराद्भूत् वरगला सुतुङ्गोदरी
घटी घटघटान्विता द्युतिमती मृदां पीवरी ।
अलावुसदृशी पुनर्विविधकुण्डभाण्डान्विता
नरेन्द्रविहिताज्ञया वरगृहं तदेकं श्रिता * ॥ ४२ ॥

आसीना गड्गड़ैका विमलनलयुता धूमपानस्य पात्री
रत्नश्रेण्येव भक्त्या प्रणमितचरणा स्वर्णरौप्यैः सहासीत् ।
यन्मूल्यं लक्षमुद्रा दिशि दिशि विकिरच्चारुभाभासमाना
नान्या यस्याः समाना वियति गृहभुवस्तल कोष्ठे स्फुरन्ती† ॥ ४३

निगुम्फितैका कनकस्य रज्ज्वा
स्वजातये स्मार्पयतीव लज्जाः ।
मुक्तामणिस्रक् युगलप्रकारा
त्विषः स्म सम्पुष्यति याऽभ्युदारा‡ ॥ ४४ ॥

* मृन्निर्मितद्रव्याणां विवृतिः क्रियतेऽनेन । This stanza refers to the *pottery* and *clay* models. "The best known styles of Indian pottery are Bulandshahar, Rampur, Peshwar, Multan and Vellore. The Lukhnow models are of highest artistic value."

† सुवर्णादिनिर्मितद्रव्याणां साधारणवर्णना क्रियते (४३—४६) । These stanzas describe some special *jewellery* articles displayed in the "Jewellery Court" alluded to in stanzas 23, 24 and 25 above. गड्गड़ा—भाषाशब्दोऽयम्, *i.e.* Hooká. नलम्—*i.e.* Pipe.

‡ मुक्तारचिता माला (Necklace) वर्ण्यतेऽनेन ।

हिरण्यैः सर्व्वाङ्गं खचितमिव तत्रैकमुकुटं
जितश्चक्रे सर्व्वं, नृपतिधनगर्व्वं स्म तुदति ।
यदीयाङ्गे हीरं त्वसितमणिकीरं किल जयत्
त्विषा डिम्बाकारं नरनयनमुद्रां वितनुते * ॥ ४५ ॥

हिरण्मयकटं वनात्प्रकटभावमानन्दतः†
समागतमिदं स्थले करिणि चारुदन्तोज्ज्वले ।
तथैव तरवारिकाप्रभृतिरस्त्रशस्त्रावली‡
बभौ जयपुरादितो विविधवीरहर्षस्थली ॥ ४६ ॥

लौहवर्म्म च‡ तथा समागतं
वीरदेहसदने यदायतम् ।
यच्च धारयितुमक्षमोऽधुना
यत्र भान्ति पुरुषे न तद्गुणाः ॥ ४७ ॥

---

* सुवर्णनिर्म्मितं मुकुटं (Diadem) वर्णयत्यनेन । असितमणिकीरं—विहगाकारेण निर्म्मितमसितमणिं (Sapphire) जयत् इत्यर्थः । निजतेजसा चक्षुर्गतिं हन्ति तत्सर्व्वदैव इति भावः ।

† The first two lines refer to the golden *Howdah* from Benares. वनादानन्दतः—आनन्दकाननात्, काशीप्रदेशादित्यर्थः । Pricè—Rs. 5,000.

‡ प्राचीनानां युद्धोपकरणानां विवरणं ददाति (४६—४७)। The cut *steel and mail* of Jeypur, Jodhpur, Udaipur and Hyderabad are referred to by the two stanzas (46, 47). "The art of steel carving has all but disappeared from India." "In the Loan Gallery are to be seen admirable series of examples of this art."

दृढ़ा च नानाविधचर्म्मपादुका
इयादिभूषा च समुन्नतांशुका* ।
समेत्य लोका ददृशुर्मुदावहे
सुसज्जितां तामथ तन्महामहे ॥ ४८ ॥

तस्मिन् सन्मणिरत्नपात्रमधिकं विद्युल्लतागात्रवत्
नेत्रोन्मीलनतां विडम्बयति यत् तत्तच्च सम्पश्यताम् ।
काचैराचरितानि तानि च पुनर्नक्तं प्रदीपार्च्चिषा-
मासङ्गाच्छतदीप्तिमन्ति परितः सञ्ज्वलज्ज्योतिषा† ॥४९॥

अत्रैकः प्रतिबिम्बधारिमुकुरः कोणैश्चतुर्भिर्युतः
दृष्टः स्वच्छतरः स चारुरचनैः काचैः सुतुङ्गाकृतिः ।
यं तच्चाप्यथ पश्यतां मुखशतच्छाया भवेत्केवला
ब्रूते किन्तु गिरं न तत्र मुखरे नृणां मुखेऽपि स्थिते ॥ ५० ॥

अत्रैवैका गृहभुवि पुनः सर्व्वदक्षप्रकोष्ठे
बौद्धी मूर्त्तिर्धृतशतरुचिर्द्रव्यगोयूथगोष्ठे ।

---

* चर्म्मनिर्म्मितद्रव्याण्युल्लिख्यन्ते । "In Ahmedabad, Surat and Baroda, a remarkable industry exists in carving rhinoceros *hides*. Shields, caskets and other subjects are made in hide half-an-inch in thickness."

† काचनिर्म्मितद्रव्याणां विवरणं ददाति (४९—५१) । These stanzas (49—51) refer to the collection of *glass-wares* and mosaics. 'तानि'—प्रसिद्धानि द्रव्याणीत्यर्थः ।

वर्णाश्चित्राः समुकुरदृषम्मन्दिरे मन्दिरान्तः
सम्यक्काचैर्मनुजनयने तत्र कामं विभान्तः* ॥ ५१ ॥

सज्जाऽशनानां† खलु बौद्धमूर्त्ते-
रासन्नदेशे जठरप्रपूर्त्तेः ।
मेमाख्यनार्य्यो विदधुः प्रयत्ना-
नवैव काश्चिद्धृतचारुरत्नाः ॥ ५२ ॥

बेल्लारेर्बहुधा कपाटनिचयास्तद्दन्महीशूरतः
पञ्जाबाच्च तथा विचित्रफलका काष्ठक्रियामूर्त्तयः ।
छादो गेहवरस्य तैरपि जनैः कोष्ठे कृतः शिल्पिभि-
र्यत्साहश्यकथा न चास्ति जगतीत्येवानुमानं मम‡ ॥ ५३ ॥

---

* "In the alcove of the room is a perfect example of pure Burmese work in the shape of a shrine of *curious-coloured glass mosaic,* copied from a pagoda in Rangoon." दक्षप्रकोष्ठे—दक्षिणस्यां दिशि वर्त्तमाने प्रकोष्ठे ।

† This refers to the alcove of the room which served the purpose of a refreshment-room, the walls of which have been panelled with a series of steering *chairs,* taken from river boats. अश्नतानां सज्जा—*i.e.* Chairs &c.

‡ काष्ठनिर्म्मितद्रव्याणां विवरणं ददाति (५३—५४) । These stanzas give description of the splendid display of articles under *Wood-work* which might be divided into *two* sections, viz., Architecture and Furniture. "Dispersed throughout the Exhibition-building will be found certain small rooms, balconies &c. which are the reproductions of work in wood from the Punjab, Bombay, Burma and Madras." "The Bellary door, the Mysore door, the Punjab-room are referred to by this sloka." "The outer windows and facade of the Punjab-room are modelled upon the Sikh-patterns of wood-carving." छादः—Roof ; छद एव छादः ।

चतुःसिंहोपर्थ्युन्नतमधिकमात्मद्युतितति
स्वयं संबिभ्रद्यो जनदृशि महाविस्मयकरः ।
समायातो ग्रीष्मालय* इह तथैकश्च रुचिरो
मठस्यांशस्तद्वत् भरतपुरतो गुर्ज्जरभुवः† ॥ ५४ ॥
नेपालाद्गृहरत्नमेकमुदभूत् तद्वत्त्रिवाङ्कुरतः‡
काथीहारभुवश्च दारुरचितो दृष्टो गृहांशः पुनः§ ।
ब्रह्माख्यादपि काष्ठकारुपुरुषैर्नानाविधा मत्तयः¶-
स्तद्वद्योधपुराद्भवाख्यनगरात् खट्वादयो दर्शिताः‖ ॥ ५५ ॥

---

* This summer residence came from Mysore, price—Rs. 437.

† "Passing round the gallery to the extreme right, there is found a sandstone facade. This was intended as the residence of the court-barbar, some 80 years ago. With the permission of H. H. the Maharaja of *Bharatpur*, portions of this home have been conveyed to Delhi." "*Guzrat* room is designed to exemplify the Jaina style of architecture and ornamentation."

‡ "*Nepal* model House will be found against the western wall of the main-hall. It is a faithful copy of one of the palaces in Nepal. The style is Chinese." "Alongside of the Jodhpur Jharoka is a section of a house given by the Maharaja of *Travancore* which is identical with the houses of the people of the state."

§ "It has been specially contributed by the Maharaja of Bhavnagar and is intended to demonstrate all the best features of an 18th century Rajput Chief's house in *Kathiawar*."

¶ "It is not until the *Burmese* room is reached that the quintessence of fragile and delicate wood-carving stands revealed. The numerous articles of *furniture* are selected to exemplify the best features of Burmese art."

‖ खट्वादयः—*i.e.* Articles of furniture, such as cabinets, book-cases, escriptoires &c. collected in Madras-room.

महीशूराद्‌द्रव्यं विविधममलं चन्दनवन-
द्रुमोद्भूतं वाक्सप्रभृतिनवनाम्ना परिचितम् ।
तथा सिन्दूरादेरधिकरणजातञ्च शतशः*
कलायाश्चातुर्य्यं प्रथयति च यत् शिल्पविदुषाम् ॥ ५६ ॥

आनीता नरकामिनीप्रतिकृतिश्चित्रा मगैर्निर्म्मिता
काष्ठानाञ्च तथा स्वभावविकलं नानाफलं कृत्रिमम्† ।
यद्दृष्ट्वा प्रकृतं कृतं फलमिति व्याख्यातमासीन्नृणां
वक्तुं नैव हि शक्यते च तदिदं नाद्यापि यद्विस्मृतम् ॥ ५७ ॥

ढक्कातः खलु शङ्खनिर्म्मितमभूत् शङ्खादिकं भूषण‡
नानालङ्कृतयो निबद्धरुचयो वङ्गादिभूयोषिताम् ।
काकिन्यादिकृतञ्च चारुमुकुराकारादि नानाविधं
द्रव्यं तत्र विभासि कस्य कुशलः संख्यातुमेतत्पुनः ॥ ५८ ॥

तरुणमरुणवर्णं, धावितानेककर्णं
नवनवमतिरम्यं, भूभृतां गात्रगम्यम् ।

---

* "Samples of the finest collection of *Sandal* wood have come from *Mysore* &c. The idols from Mysore and two or three cabinets are of a most exceptional high order." • "From Vizigapatam have come horn veneered over Sandal wood *boxes*." वाक्स—Boxes. "Mysore stands pre-eminent for inlaid wood-carving and sandalwood."

† Refers to the wooden figures and wood-made fruits from Burma; Rutlam and Ratnagiri and other places. मगाः—The Burmese.

‡ शङ्खनिर्म्मितद्रव्याणि वर्ण्यन्ते । Refers to the *Shell-works* of Dacca.

बहुविधनिभयासीत्तत्र काश्मीरमूलं
जनदृशि परिभातं शालनाम्ना दुकूलम् * ॥ ५९ ॥
कमलकुसुमलेखानिर्म्मितं चारुवर्णं
किमपि च परिभास्वत्पुष्पवहृत्तपर्णम् ।
क्वतिषु सुनिपुणैर्यन्मूचकार्य्येण नीतं
तदपि वसनमुच्चैः शालनाम्ना परीतम् ॥ ६० ॥
धवलमरुणमेवं, यत्नवद्‌भूपसेवं
किमपि च खलु पीतं, शालशब्दं भुवीतम् ।
यदभिखचितगात्रो गौरवाढ्यः समाजः
तदिह किल दुकूलं शिल्पगेहे रराज† ॥ ६१ ॥
न केवलं शीतमिदं निवारयेत्
धृतं जनानां बहुमानमानयेत् ।
निषेव्यते यद्‌गुणिनां प्रहर्षणै-
र्धनव्ययैश्चापि धनोन्नतैर्जनैः ॥ ६२ ॥

---

* काश्मीर-शालवस्त्राणां वर्णना क्रियते (५९—६४)।  These 6 stanzas refer to the superb series of *Káśmír Shawls,* lent by the Maharaja of Káśmír. "The walls and ceilings of the Hall are covered with beautiful specimens of Carpets, of which one of the largest in blue and gold, have been specially made in Káśmír."

† शालेति शब्दम् इतं तद्दुकूलं रराज इत्यन्वयरीतिः ।

काश्मीरदेशोऽस्य जनेर्विधाता
रोमावली पाशविकाऽस्य माता ।
भ्राता पितुस्तस्य तथान्यदेशः
स्वयञ्च वस्त्रात् सकलाद्विशेषः* ॥ ६३ ॥

नानाविधाकारमभिप्रयातं
यदेव भास्वद्भुवने विभातम् ।
सर्व्वेषु वस्त्रेषु च यद्विशालं
तदेव भाति स्म गृहेऽत्र शालम् ॥ ६४ ॥
(षड्भिः कुलकम् ।)

रत्नाढ्या मणिहीरकाञ्चनचमत्काराकृतिर्गालिचा-
ख्याता मौक्तिकतल्पपट्टमहिषीवैकापि या भूतले ।
साप्यस्मिन् वरदेश्वरस्य नृपतेः कोषात्समभ्यागता
यन्मूल्यं कृतिभिस्त्रिलक्षगणिता मुद्रेति सङ्कीर्त्त्यते† ॥६५॥

कौषेयाणि च राङ्कवाणि च तथा क्षौमाणि पट्टानि च
प्रादुर्भूतसुवर्णबिन्दुखचितान्यन्यानि वस्त्राणि च ।

---

* अस्य शालनामकदुकूलस्य जनेः प्रसवस्य विधाता कर्त्ता काश्मीरदेशः ; काश्मीरदेशप्रभवमिदमित्यर्थः। पाशविका पशुसम्बन्धिनी रोमावली अस्य माता ; पशुलोम्नः जातमिदं, पशुलोमनिर्म्मितमित्यर्थः । अन्यदेशः अस्य पितुः काश्मीरस्येति यावत् भ्राता भवति सम्बन्धेन ।

† "On the walls of the Loan Collection Gallery will be seen the famous *Pearl Carpet of Baroda.* This is woven on a field of Pearls, the pattern being in turquois, emeralds, rubies and diamonds. Its cost is about Rs. 3,00,000 (or £20,000)." गालिचेति •ख्याता, भाषाशब्दोऽयम्—Carpet.

ईयुर्मालदहादितोऽमृतसरात्कामं महीश्वरतो
मुलतानादविमुक्ततो मुरशिदाबादाच्च बम्बास्थलात् ॥ ६६ ॥.
आरङ्गाबादभूमेर्विलसितमभवत् "साङ्कि"संज्ञं दुकूलं
कार्पासानां तथोच्चैरपि च मणिपुरात् मूल्यवद्भूरि तद्वत् ।
ठानादिः चौमवस्त्रादिषु च कुशलतां दर्शयामास गुर्व्वीं
तद्वद्युक्तप्रदेशादपि च सुनिपुणा ये पुनावासिनश्च * ॥६७॥
(युग्मकम् ।)

दृष्टाऽस्मिन् रुचिराकृतिः किल जगद्वाल्याश्च शुभ्रा नवा
मूर्त्तिश्चारुतरेभदन्तरचिता तद्दर्शनीमण्डपे ।
काली पूजयतस्तथा मुरशिदाबादात् समभ्यागता
तत्रैका खलु चित्रकार्य्यविदुषा मूर्त्तिश्च सन्दर्शिता† ॥ ६८ ॥

---

* नानाविधचौमवस्त्रादीनां वर्णनां करोति (६६-६७) । These two stanzas describe the collection of silk and other *Fabrics*, Muslins and *Embroidery* and Braiding works. "The most important centres of the Indian art silk manufactures may be said to be, Amritasar, Multán, Máldah, Mursidábád, Aurungábád, Benares in the United Provinces (युक्तप्रदेश), Mysore, Thána (ठानादि), Pooná, Bombay, Manipur &c. &c." अविमुक्ततः—काशीप्रदेशात् । "Of the *mixed* fabrics, the most curious are the applique of Manipur." "Gold wire and embroidery is largely made in India." "साङ्कि"संज्ञमिति—साङ्कीति कौषेयवस्त्रविशेषाणां प्रसिद्धा संज्ञा । This priceless piece of solid gold embroidery. was placed in the Loan Collection Gallery. कौषेयाणि—Silken ; राङ्कवाणि—Woollen ; चौमाणि —Linen.

† गजदन्तनिर्म्मितद्रव्याणां विवृतिं करोति (६८-७१) । "Few articles are handled with greater skill and neatness in India than *Ivory*. There are numerous important centres in each of which the carvers have attained high proficiency." The more important are Mursidábád, Moulmín, Travancore, Delhi and Mysore.

धूमैः सर्ज्जरसस्य गन्धगरिमण्युज्जृम्भमाणे* त्वरा
तत्रासीद्बलिकर्म्म यूपनिकटे तत्पश्यतां दर्शने ।
छागच्छेदमथाकरोत्प्रकृतवच्छेत्ता पशूनां पुनः
साद्याप्यस्ति ममान्तरे स्मृतिपथे मूर्त्तिश्चमत्कारिणी ॥ ६९ ॥
(युग्मकम् ।)

धवलकिरणजालं तत्पुनस्ताजमहालं
पुनरपि दृष्टश्चोऽस्मिन् पार्श्वगद्रव्यमालम् ।
गजदशनकृतैका संस्कृता पाटिनाम्नी
हिमकिरणसवर्णा संस्थिता तत्र धाम्नि† ॥ ७० ॥

शय्यानामपि मार्ज्जनी च धवला मातङ्गदन्तोत्थिता
तत्रासीदथ दर्शकस्य हृदयं विस्माययन्ती रुचा‡ ।
त्वग्भाण्डं विविधं हयोपकरणं तच्चर्म्मवर्म्मादिकं
वीराणामपि गात्रभूषणशतं तस्मिन्नभून्मञ्जितम् ॥ ७१ ॥

नानाचित्रपटी—तथाच शवरीवेशान्विता पार्व्वती
हस्ते चारुधनुः शरांश्च दधती बम्बा-पुना-भूमितः ।

* गन्धगरिमणीति—"तत्र" (मन्दिरे) इत्यस्य विशेषणम् । उज्जृम्भमाणे इति—"यूपनिकटे" इत्यस्य विशेषणम् ।

† एतत्ताजमहालमन्दिरमपि गजदन्तनिर्म्मितमासीत् । पाटिनाम्नी—*i.e.* The beautiful ivory *S'ital-páṭi.*

‡ इतः पर्य्यन्तं गजदशनकृतद्रव्यविवरणं प्रदत्तम् । For the last two lines, *Vide* notes on stanzas 46-47. "Baroda stands out prominent for its carved *rhinoceros hide shields* and Tanjore for its carved *steel weapons.*"

अन्या मन्दिरगामिनी करतले गन्धाढ्यपात्रं वह-
न्त्येकं दृष्टिपथे बभौ समुदिता या शिल्पकीर्त्तिः परा * ॥७२॥
आलोयारनृपेण दत्तमुद्भूत् पुस्तं गुलिस्ताभिधं†
मूल्यं यस्य च पञ्चसप्तसहिता मुद्रा च लक्षाभिधा ।
तद्वत्पण्डितजानकी समददात् मूर्त्तीश्च रामायणी‡-
रात्रातः शिशुखेलनानि च पुनर्दृष्टानि दृष्टानि च ॥ ७३ ॥
विख्याता भुवि भारते मुरशिदाबादस्य चान्तर्गता
वैषाणोत्थितकारुकार्य्यकुशला खागड़ादिनाम्नी च भूः ।
पल्ली च त्रिचिना, त्रिवाङ्कुरमपि ब्रह्मप्रदेशः पुन-
र्मुङ्गेर् श्रीनगरं जलन्धरधरा तद्वच्च मान्द्राजभूः ॥ ७४ ॥

---

* चित्रपटानि वर्णयन्ति । The poet now gives a description of the *Fine Arts*. "Fine Arts may be referred to two sections : *(a)* Statuary and castings in marble, brass, bronze &c. and *(b)* Flat decoration, as pictures, binding &c." "On the left is exhibited for the first time and represents Parvati as Shabari, the forest or Bhil-woman. That on the right is a Hindu Lady walking to the temple." "This was shown at the Paris Exhibition."

† Perhaps one of the most attractive features of the Exhibition may be said to be the collection of *ancient books*. Of these, special mention may be made of the Gulistán from Alwar, kindly lent by the Maharaja. This copy is valued at Rs. 1,75,000." "A single page was written in a fortnight and the whole work in 12 years. The borders were painted by Natha Sha and the illustrations by Gulám 'Ali Khán."

‡ "Rái Báhádur Jánakínáth Paṇdit of Delhi has contributed a most interesting series of 72 pictures illustrative of the scenes in the Rámáyana." *These extracts have been taken from Dr. Watt's Handbook of Delhi-Exhibition.*

एतस्मादपि देशतोऽपि विजनग्रामादितो वान्यतो
वैषाणानि भवन्ति शिल्पविदुषां द्रव्याणि भोग्यान्यहो ।
इत्यादि प्रचुरं तथा रतलमादृष्टं बभूवाद्भुतं
निःसादृश्यवशोऽथ रत्नगिरितो द्रव्यञ्च काष्ठोद्भवम्* ॥७५॥
(युग्मकम् ।)

न जात एतादृश उत्सवोऽन्य-
स्तद्दर्शको यस्य स एव धन्यः ।
न लोकयिष्यन्ति पुनश्च सन्तः
यत्तादृशं सर्व्वभुवं भ्रमन्तः ॥ ७६ ॥

द्रव्यं तथेत्यादिकमन्यदन्य-
दन्यप्रदेशादपि यत्तदन्यत् ।
निवेदितं किञ्चिदिदं समाप्तं
ममाप्यभूद्दृष्टिपथं यदाप्तम् ॥ ७७ ॥

इति श्रीश्रीश्वरीये दिल्लिमहोत्सवे खण्डकाव्ये
शिल्पप्रदर्शनीविवरणी नाम
चतुर्थः सर्गः ।

---

* वैषाणद्रव्याणां वर्णना क्रियते (७३-७४) । These two refer to the *Horn* wares (73-74). "In *Ratnagiri* Bison-horn is carved in candelabra, table ornaments, Card-trays &c. Peacock-feathers are worked up into fans, boxes and other articles." रतलमात्—Rutlam. विजनग्रामात्—Vizianagram. खागड़ा—Khágrá in Mursidábád ; पल्ली च त्रिचिना—Trichinápally.





# पञ्चमः सर्गः ।

इत्थं दिल्ली नृपकृतमहव्यक्तशोभासहस्रा
पर्व्वप्रेक्षाप्रमुदितजनक्षिप्तदिक्संख्यघस्रा ।
नानादेशात् जनपदगतैर्लुप्तजम्बालमाला
सर्व्वोत्कृष्टा समजनि रुचा सुन्दरी श्रीविशाला * ॥ १ ॥

तत्कार्य्याणां कियदपि पुरावृत्तमात्रोत्सुकाना-
मस्माकं नो वचनगरिमा केवलोत्साहगानाम् ।
येषां दिल्ली न नयनगता, तेन येषां विषाद-
स्तेषां मोदादियमपि कथा, याच्यते सत्प्रसादः † ॥ २ ॥
(युग्मकम् ।)

---

* महः—उत्सवः । दिक्संख्येत्यादि—दशदिवसमित्यर्थः । जनपदगतैः—लोकानां दिल्ल्यां समागतानां चरणचारणादित्यर्थः । जम्बालः—कर्द्दमः (mud, clay) ।

† राज्याभिषेकाङ्गीभूतानां विविधानां कृत्यानां (Durbar Functions) किञ्चिद्विवरणं दातुमुपक्रमते । तत्कार्य्याणाम्—दिल्ल्यां सम्पादितानां विविधकृत्यानाम् (Functions) । पुरावृत्तेत्यादि—ऐतिहासिकं विवरणं लिपिबद्धं कर्त्तुमुत्सुकानामस्माकमित्यर्थः । अस्माकं (i.e. कवेः) वचन-

आक्रीडनस्य भुवि, रम्यतरे सुवारे
वाद्यैः सहस्थगितसैन्यगणप्रचारे ।
इंग्राजराजपुरुषैः कृतसन्निवेशे
ब्राह्मी स्तुतिः समुदियाय च तत्प्रदेशे * ॥ ३ ॥

बिभ्यत् सूर्य्यस्तुहिनकिरणो धावतः प्रत्यहं खे
विश्वप्राणः पवति पवनः सन्ततं यद्भयेन ।
दूरं सर्व्वैः प्रणतशिरसा तं† स्मरन्तः प्रणेमु-
र्गीतिस्तस्य स्तुतिमुखरिता सा वियत्युत्पपात ॥ ४ ॥

अर्द्धं तत्र प्रणतपुरुषैरीरितं, चापरार्द्धं
सैन्यश्रेणीमिलितवदनैः स्निग्धमुद्गीयमानम् ।
द्वैधं भिन्ना परिणतफला पूतसूक्तिः पुराणी
प्रादुर्भूता मधुरमधुरं वाद्यदीर्घीकृताङ्गा‡ ॥ ५ ॥

---

गरिमा वाक्पटुत्वं नास्त्येव इत्यर्थः । इयं कथा—कीर्त्यते इति शेषः । याच्यते—अस्माभिरिति शेषः । तत्कार्य्याणाम् इयं कथा इति सम्बन्धः ।

* दिल्ल्यां सम्पादितानां विविधानां कृत्यानां मध्ये, आदौ परमेश्वराराधनरूपं शुभकृत्यम् (State Church Service) उल्लिखति (३-६) । "His Excellency the Viceroy attended DIVINE SERVICE to-day (Jan. 4. Sunday) at 11 A. M. The service was held on the western *Polo-ground*. There was a large attendance, and the scene was most impressive." वाद्यैरित्यादि—"The Massed Bands—British only—were on the grand Band's stand." सैन्यगणेत्यादि—"The troops were drawn up on the north and south sides of the Polo-ground."

† तं—परमेश्वरमित्यर्थः । गीतिस्तस्येत्यादि—"The effect of the prayers and responses that rolled across the plain was most effective.".

‡ "The service was opened by the Psalm "Dominus Regnavit," very finely

सम्पाद्यैवं प्रणतशिरसा कृत्यमेशं विधिज्ञो
दारैः सार्द्धं प्रतिनिधिरयं लार्डनेशस्य भर्त्तुः ।
कल्याणाशीर्वचनरचनैस्तत्र गम्भीरघोषै*-
रानन्दोत्थैर्जयजयरवैः पूजितोऽभ्यर्थितश्च ॥ ६ ॥

महोत्सवेऽस्मिन् पुनरप्यभून्नवो
हविर्भुजो नक्तमहो ! महोत्सवः ।
हिरण्यशुक्रद्युतिभास्वरान्तरे
द्विसंख्यकाहेऽप्यथ सौरवासरे† ॥ ७ ॥

दिल्ल्या वहिः प्रान्तरभूप्रदेशे
नृपाज्ञयाविष्कृत-तद्विशेषे ।
अपूरि लोकैः सहसा स्खलन्तत्
अभीक्ष्णयाऽनेकशताननं यत् ॥ ८ ॥

---

*rendered* by the choir of soldiers." "A hymn was sung and the words were taken up by the standing congregation." प्रणतपुरुषेण—One of the Ministers. पुराणी सूक्तिः—The Psalm. द्वैधं भिन्ना—अस्या अर्द्धं याजकैर्नीचारितम्, अपरार्द्धं मिलितैः सैनिकपुरुषैः ; अतएव द्विधा भिन्ना । द्वैधमिति द्विधाशब्दात्स्वार्थिकः अञ् ।

* आशीरित्यादि—Refers to the *Sermon* delivered by Bishop Copleston and to the *Thanksgiving* pronounced by him.

† अग्निक्रीड़ोत्सवं (PYROTECHNIC DISPLAY) किञ्चित्कथयति (७—११) । "There was a superb display of Fire-works this night (Jan. 2) on the Maidan in front of the Jumma Masjid." नक्तम्—रात्रौ । हिरण्यशुक्रेत्यादि—This line refers to the grand *illumination* of Delhi on the same evening.

शून्ये हिरण्यं कुसुमं पवित्रं
क्वचिद्भ्रमद्भातमतीव चित्रम् ।
क्वचिच्च चन्द्रातपवत्प्रकाशे
नानाननो वह्निरलञ्चकासे * ॥ ९ ॥

ततः खधूपस्य च सम्प्रसारणं
वियद्बभाट्चक्रकदम्बकाननम् ।
उड़ोकड़ोः सृष्टिकड़ोकड़ोः पुनः
प्रदर्शितः कारुनृणां† महान् गुणः ॥ १० ॥

महोत्सवेऽस्मिन् ज्वलिते खधूपे
तारावतारे सति चैकरूपे ।
विदुर्न ताराः स्म वियत्प्रचारा-
स्ताराश्च तस्मिन् ज्वलनावताराः‡ ॥ ११ ॥

लसंस्तरुस्तत्र सुवर्णवर्णः
फलत्फलैर्ध्वस्तमलैः सपर्णः ।
मुहूर्त्तमात्रं स वियद्विहारी
समापतज्झर्झरशब्दकारी ॥ १२ ॥

---

* "डलयो रलयोश्चैव शसयोर्वबयोस्तथा । वदन्त्येषां हि सावर्ण्यमलङ्कारविदो जनाः ॥" इति 'नलोदयकाव्य'-व्याख्याने श्रीमद्धितपूज्यपादभास्करानन्दश्रुतवचनम् । एवमन्यत्रापि द्रष्टव्यम् ।

† कारुनृणाम्—Messrs. Brock & Co. of the Crystal palace were in executive charge of the Fire-work-display.

‡ विदुः स्म—लोका इति शेषः ।

शून्ये च षड्मूर्त्तिरधिष्ठिताऽभूत्
ह्रिया परास्तेव च तत्र विद्युत्।
नारीभिरेषोज्ज्वलितोज्ज्वलाभिः
सुवर्णचन्द्रप्रतिमेव भाभिः* ॥ १३ ॥

गात्रावनद्धवरवर्म्मलसन्मणीनां
संक्रीडनं रणरसाढ्यमनीकिनीनाम्।
संसद्गृहे समजनि त्रिमिते शुभाह्वे
तद्दर्शनोत्सवसमाहृतनृप्रवाहे† ॥ १४ ॥

निषादिनो भटपतिसम्भृताज्ञया
प्रतस्थिरे रणभुवि संयदिच्छया।
क्षते तथेङ्गित इह सुप्रये, हयाः
क्षणाच्च ते भुवि सुषुपुर्गलद्भयाः‡ ॥ १५ ॥

---

* षड्मूर्त्तिः—Refers to the collosal fire-portraits of the Duke and Duchess of Connaught, Lord and Lady Curzon, the King and Lord Kitchener. नारीभिः—अग्निमयीभिः स्त्रीमूर्त्तिभिः।

† अधुना सैन्यक्रीडाप्रदर्शनं (ASSAULT-AT-ARMS) कथ्यते (१४-१९)। "The Assault-at-Arms took place in the Durbar Amphitheatre (on the 3rd and 5th), where some 8,000 spectators assembled. The Viceroy and the Lady Curzon being among those present." त्रिमिते—"वृत्तिविषये संख्यावाचकशब्दस्य पूरणार्थत्वम्" इत्यनेन पदसिद्धिः, त्रिभागवत्।

‡ "The 8th Bengal cavalry gave a really grand *cavalry display,* their final charge at the gallop, their lances in the rest, being magnificient." संयत्—युद्धम्।

हयाश्च ते भुवि शयनं समाश्रिता-
श्चकाशिरे हतगतयो यथा हताः ।
तिरोहिता हयवपुषा च ते जना-
नलध्वनिं बहु विदधुर्गतस्वनाः * ॥ १६ ॥

जनोऽपि कस्तुरगघटां ततः शनैरथानयन्
द्रुतं ययौ स एकलः स्मितमकलो मृदु स्मयन् † ।
स्वपृष्ठगं विना जनं द्रुतगतयोऽर्वतां वराः
प्रदुद्रुवुर्विलङ्घितद्रुमतृणगर्त्तसङ्कराः ॥ १७ ॥
(विशेषकम् ।)

मृदान्तलाद्घटोद्धृतिः कथमिव सम्भवेच्च ? तत्-
परीक्षणं ददुर्भटा निजकृतविक्रमैर्महत् ।
चतुर्दलै रणस्थले समरबुधैर्जनैस्ततः
परीक्षणे सति च हृदां बभौ मुदां चयस्ततः ‡ ॥१८॥

इमे भटाः सुदूरतः सुजवनवाजिराजिता
रणस्थलं विविशुरहो स्वविक्रमैः समन्विताः ।

---

* नलध्वनिं—बन्दुक-ध्वनिम् ।

† एकलः—एकाकी । मृदु स्मितं स्मयन्—Cognate verb. अकलः—Silent, taciturn.

‡ "The *Tent-pegging match* was won by the 15th Bengal Lancers." चतुर्दलैः—Regiment from each of the four commands. "The 3rd Bengal cavalry captured the second place."

मदान्तलात्ततः शनैर्वहिरलमानयन् घटीः
ववाशिरे रथाद्भवाः, तनुरपि नाभवत् त्रुटिः* ॥ १९ ॥
झझंध्वनिस्तदाऽभवत् जयजयरावमिश्रितः
कृते परीक्षणे ततो जननिकरोऽपि विस्मितः ! ।
अमी भटा रणोत्कटा रजतपरिच्छदानगुः
तदा नृपान्मुदान्वितादिति सकला जना जगुः† ॥ २० ॥
(विशेषकम् ।)

ततः शिखा लसच्छिखाः श्रुतिगतवाद्यसङ्गमाः
शनैः शनैः पदे पदे विलसितपादचंक्रमाः ।
करद्वये च मुद्गरं सितमथ पीतमप्यलं
दधुर्भृशं सितस्मिताः पुनरपि चोत्तमं बलम्‡ ॥ २१ ॥
चमूपतेरथेङ्गितादद्वयमपि तन्नृणां ततो
हठादभून्नगाकृतिः,§ क्रमयोऽपि तत्सभाङ्गतः ।
तरुर्यथा शिरस्तमुर्गुरुः शनैश्च मूलतो,
युगं युगं भटस्तथा तदा बभूव सन्ततः ॥ २२ ॥

---

* तनुरपि—क्षुद्रापि, स्वल्पापि । ववाशिरे—वाश शब्दे ।

† "*The cup* presented by the viceroy for the riding and jumping competition among the mounted branches of the service *was won* in fine form by the 5th Dragoons." रजतपरिच्छदम्—Silver-cups. रवरव रावः, "प्रशादिभ्योऽण् ।

‡ "The *Club-swinging* of the 15th *Sikhs* was much admired. The white-robed Sikhs in huge diamond-shaped formation did clever and pretty work and were warmly applauded."

§ नगाकृतिः—वृक्षाकारेण शिखाः सज्जिता अभवन्, "शैलवृक्षौ नगावगौ" इत्यमरः ।

ते ते लोका: सपदि परितो मुद्गरं घूर्णयन्तो
कम्पैरूर्द्धं सुदृढ़वपुषो विस्मितास्तेन सर्व्वे ।
तेषां शिक्षां समरसदने नन्दयन्तो जनौघा:
के के नास्मिन् जहृषु*रधिकं भारते जन्मभाजाम् ॥२३॥
(विशेषकम् ।)

अनस्वयोऽथ षड्मितोऽप्यनडुहि सङ्गतोऽगमत्
रणस्थलेषु य: पुराऽनलं द्विषन्मुखेऽवमत् ।
भटेङ्गितैस्तुलोपम: कृतश्च संसदीच्छया
मरुच्चलस्तृणव्रजो यथा तथा सुशिक्षया† ॥ २४ ॥

जलैस्तथाग्निभिर्यथा प्रकटितधूमकेतना
मरुद्गतेरपि त्वरा ततिरनसामयोऽध्वना‡ ।
अनांसि षट् रणस्थले सदस्वतां दिदृक्षया
ययु: पलादपि द्रुतं भटगणचारुशिक्षया ॥ २५ ॥

---

* जहृषु:—आनन्देन इत्यर्थ: ।

† "The Musical *Drive* by "J" Battery Horse Artillery, was warmly received." "The graceful evolutions and clever manipulations were most effective." "First at a walk, then at a trot and canter, the gun's teams circled right and left, in and out, performing most intricate movements." तुलोपम: कृत:—अतिलघु तत्र बवचार इत्यर्थ: । संसदीच्छया—सद:स्थितजनानां दर्शनार्थम् ।

‡ यथा लौहाध्वना धूमध्वजविशिष्टा अनसान्तति: (*i.e.* the Railway Carriages) वायुवत् चलति, तथा अत्रापि अनांसि ययु: इति भाव: ।

प्रदुद्रुवु: सभास्थलाद्दृषनिचयास्ततो बलात्
यथा भवेद्दुड़ोर्गति: क्वचिदपि शून्यत: स्थलात् ।
क्वचित्तदार्द्धचन्द्रवत् क्वचिदपि गोलडिम्बवत्
क्वचित्ततस्ततो भ्रमत्परश्चकटं व्यलङ्घयत् ॥ २६ ॥

(विशेषकम् ।)

ततो भटा ननृत्सिरे परिषदि लण्डनस्थलात्
जनाश्च तान् तदागता: परिददृशु: कुतूहलात् ।
क्वचित्तदैकघोटक: क्वचित्त्रयो दश क्वचित्
ननर्त्त तत्र वाद्यत:, समुत् बभौ नृणाञ्च चित् * ॥२७॥

तत: पुनानिवासिनो निषादिन: समागता:
परीक्षयाश्वचालनं प्रचक्रिरे तदा तता: ।
समुद्बभौ कुतूहलान्नरमुखत: स्मयच्छटा
ततोऽजनि चणान्नृणां करतलतालिकाघटा† ॥ २८ ॥

ययुश्च रङ्गमण्डपं हयक्रतवेगिनो भटा:
प्रतोदकं जिहीर्षव: स्वशिक्षया बलोत्कटा: ।

---

* "This describes the musical and graceful evolutions of the 15th Hussars and 4th Dragoons." "They mounted alternately on grey and then on bay Arabs." मुदा आनन्देन सह वर्त्तमाना इति समुत्, चित् बभौ इत्यर्थ: ।

† "The *Poona horse* gave a remarkable display of equestrian skill. The sowars galloping in hanging down from the saddle, picking up things off the ground, others standing on horses' backs doing sword exercise."

चलत्सु तेषु वाजिषु प्रसुप्तिभावमन्विता
जनास्ततोऽर्व्वतः परे निषेदुरुत्थिताः स्थिताः ॥ २९ ॥
भटोऽपि कः स्ववाहने निजपदमेकमुन्नयन्
परं पदं परतुरगे ततो दृढं समर्पयन् ।
ययौ, जगौ च कोऽपि वा रणजयगीतमुत्तमं
चकार तन्मदोऽन्तरे तड़िल्लतासमं क्रमम् ॥ ३० ॥
अथाऽश्वपट्टटोऽपि कः स्वतुरगपृष्ठमन्दिरे
न चापतत्, ततो जनास्तमपि च संववन्दिरे ।
सुशिक्षितस्ततोऽपि कोदृढतरशिक्षितैर्हयै-
र्मृदां तलादुपानयत् निपतितयष्टिकां रयैः ॥ ३१ ॥
(कलापकम् ।)
अथैन्द्रजालिकां क्रियां करपदनिर्म्मितां भटाः
व्यदर्शयन् सभाग्रतो निजतनुमुल्लसत्पटाः ।
समुद्रपश्चिमे तटे विरचितमन्दिरान् जना-
नभीक्ष्य केऽथ नाभवन्न च न च विस्मितानना: ? * ॥३२॥
इत्थं कृत्रिममप्यकृत्रिममिव प्रेक्षावतामग्रतो
नीतं युद्धमनामिषं भटचयैः कैः कैश्च धावद्धयैः ।

* "Colonel Hill's *Gymnastic staff* astonished the vast assembly with an admirably executed series of physical feats."

आश्चर्य्यां पुनरिन्द्रजालरचनामिंलण्डमल्लोत्थितां
नापश्यन् खलु ये त एव च जना व्यर्थैस्तथा भूतले ॥३३॥

देयानियाम इति नामधरे च गेहे
वस्त्रादिधारणमिथःक्रियया स्फुटेहे ।
अक्कि चिमे, ध्रुवमुपाधिविज्ञापनाद्यैः
शब्दो बभूव मधुरः किल गीतवाद्यैः* ॥ ३४ ॥

तत्रैव सर्व्वजनगाचलसन्मुवर्णौ
गेहे च रक्तसरसीरुहचारुवर्णौ ।
विद्युद्द्युतिस्फुरणभिन्नमरीचिलोके
लेभे नरो वरमुपाधिशतं विलोके† ॥ ३५ ॥

(युग्मकम् ।)

---

* उपाधिवितरणमपि (THE INVESTITURE CEREMONY) किञ्चिद्वर्णयति (३४-३५) । "The Dewan-i-Am last night (Jan.3) was the scene of almost as historical an event as the great Durbar. In the stately hall of the Mogal Kings, a Viceroy of India with a Royal Duke by his side conferred decorations on a large number of European and Indian subjects of the King Emperor." ईहा—चेष्टा । चिमी—तृतीयपरिमिते, "वृत्तिविषये संख्यावाचकशब्दस्य पूरणार्थत्वं," चिभागवत् । वस्त्रादिधारणेत्यादि—Refers to the blue and white robes of the Star of India which the Duke of Connaught wore and the dress of the Viceroy with the great star of the Master of the Order shining upon his breast and also to the gorgeous uniform and dresses of the kings. गीतवाद्यैः—Refers to the blasts of trumpets and the rattle of kettledrums of the Heralds.

† रक्तसरसीरुहेत्यादि—"The *red-pillared walls and roofs* were illuminated with thousands of electric lights which hung in clusters from the above." नरः—जातावेकवचनम् ।

बाहादूराख्य रायाः कति कति मनुजाः केऽपि राजीभवन्तः
सीयायीत्यादिवाचां स्थलमपरजनाः स्युर्महाराजसंज्ञाः।
आपुः ष्टारादिसम्मानितपदमुचितं भूतिभाग्यानुकूल्यात्
श्रीश्रीराजप्रसादात्कति कति च जना निर्गताधीनुपाधीन्*॥२६

मासे च पूर्व्वकथिते विधिवत्तदानीं
तस्यैव सप्तमदिनस्य निगृह्य पाणिम्।
दत्त्वेव युद्धविदुषां हृदयेषु लज्जाः
प्रादुर्बभौ नृपतिसैनिकयुद्धसज्जा† ॥ ३७ ॥

गेहञ्च तत्क्षणत एवमपूरि लोकै-
राश्चर्य्यभा समुदिता मनुजावलोकैः।
राज्ञः सहोदरसमागमनात्परञ्च
दृष्टं नृपप्रतिनिधेरपि यानमञ्चं‡ ॥ ३८ ॥

---

* तेषामेतोपाधीनां कतिपयसंज्ञां निर्दिशति। श्रीश्रीराजप्रसादादिति—"The Viceroy invested them *in the name of* the King-Emperor with the insignia." "Among those who were honoured were the Chiefs of Charkhari, Cochin, Miraj, Nabha, Shahpura, Sirmur, Sirohi, Tehri and Travancore, the Khan of Dir, the Mirs of Hanza and Nagar and the Mehtar of Chitral."—*India Govt. Despatch of 12th June, 1903.*

† भारतीयनृपाणां किञ्चित् रणसज्जाप्रदर्शनं (REVIEW OF INDIAN RETAINERS) वर्णयति (३७—८७)। This review took place on Jan. 7. "None of the Durbar-functions has been held under more ideal conditions. The show itself could hardly have been more fascinating or more admirably arranged." "Some 40 states sent contingents."

‡ "Their Excellencies and their Royal Highnesses arrived at 11-30 A. M." यानमञ्चम्—The Amphitheatre.

सर्व्वाग्र एव सहयाः पृतनाः प्रवीणाः
रङ्गस्थलं द्रुतमगुर्वपुषा च पीनाः ।
कोलापुरस्य, शिवजेर्भुवि तुङ्गवंश-
जातश्च यन्नरपतिं जनता शशंस* ॥ ३९ ॥

एकः करी गिरिवदुच्चमुखीं पताकां
पृष्ठेऽवहत् स इह गैरिकवर्णरागाम् ।
येषा पुरा शिवजिसंयति निर्म्मिताऽभूत्
साऽद्यापि भाति तदनीकपतेर्महामुत्† ॥ ४० ॥

रेजुश्च विंशतिमिताः सुनिषादिनस्ते
शस्त्रं निगृह्य रविभोज्ज्वलमेव हस्ते ।
पश्चात् शतञ्च विततं भुवि सैकमानं
नृणां सविंशमुदभूच्च सुहस्त्ययानम्‡ ॥ ४१ ॥

---

* प्रथमतः जनविंशतिश्लोकैः बम्बाइप्रदेशीय-(Bombay-states)-रथसज्जाप्रदर्शनी कथ्यते । तत्रादौ कोलापुरपतेः रथसज्जां वर्णयति (३९-४१) । "The procession began with the Bombay states, Kolhapur coming first." यन्नरपतिं—यस्य कोलापुरस्य नृपतिं शिवजेः (The Great Sivaji) वंशधरमिति जनता प्राह स्म । कोलापुरस्य वर्त्तमानः भूपालः शिवजिवंशधर इति द्रष्टव्यम् । जनता—"ग्राम-जन-बन्धु-सहायेभ्यस्तल्" । शशंसेति शंसु स्तुता-वित्यस्य लिटि ।

† येषा—पताकेति यावत् । सा पताका तस्यानीकस्य पत्युः कोलाधिपतेर्महामुत् आनन्ददायकपिणी-त्यर्थः । शिवजिसंयति—शिवजिकृतयुद्धे निर्म्मिता याभूत् इत्यर्थः ; "स्त्रियः संयत्समित्याजिसमिद्-युधः" इत्यमरः ।

‡ सुनिषादिनः—अश्वारोहिसेना रेजुरित्यर्थः । पश्चादित्यादि—सुहस्त्यं यानं गमनं यस्य तन्नृणां सविंशं सैकमानं शतम् उदभूत् ; पदातिसेना एकविंशतिसंख्यका उदभूदिति वाक्यार्थः ।

अन्यः करी च ददृशे पुनरुद्धतारिः
स्वर्णातपत्रसहितो रणवेशधारी ।
शौर्य्यच्छटा न तु भटेषु च तेषु सन्ति,
कालेन केऽपि लघवो न जना भवन्ति ? ॥ ४२ ॥

भूपं भटस्य निचयः स च लेडिजानिं
राज्ञः सहोदरमपि प्रणमन् तदानीम् * ।
अन्तर्हितो नयनतो नयनाभिरामः
संसत्पदात् स्वशिबिरं त्वरितं जगाम ॥ ४३ ॥

कच्छेन्द्रस्यापि सैन्यात्प्रथममथ ससारैक एव द्विदन्त-
स्तत्रैव द्वे पताके नरपतिकुलसच्चिह्नयुक्ते विचित्रे ।
एका व्याघ्रेण, मत्स्येन च पुनरपरा स्वर्णदेहेन दृष्टा,
शोभाश्चर्य्या च कापि द्युतिशतमुखरा, तां न शक्तोऽस्मि वक्तुम् †
॥ ४४ ॥

तस्मिन्निंराजिवाद्यं नवतिमितनृणां वादकानां प्रवृत्तम्,
हो-हो-हो-शब्दवन्तः प्रबभुरतितरामिंग्लिशस्तन्निशम्य‡ ।

* लेडिजानिं—लेडि: जाया यस्य तं, जायाशब्दस्य जानिरादेशः । भूपम्—*i.e.* Lord Curzon ; राज्ञः सहोदरम्—*i.e.* The Duke of Connaught.

† ततः कच्छ-नृपते रणसज्जां कथयति (४४-५०) । "Kolhapur was followed by a varied gathering from *Cutch.*" कुलचिह्नम्—*i.e.* National emblem ; एका—पताकेति यावत् ।

‡ इंग्लिशः—*i.e.* इंग्लैण्डदर्शकाः, *i.e.* The English spectators ; अशृणुरित्यर्थः ।

उष्ट्राणां द्वादशानामुपरि सुमधुरं श्रोत्रपेयञ्च पश्चात्
श्रुत्वा वंशीनिनादं परिषदथ ततो मोहितेवाविरासीत् ॥४५॥
उष्ट्रेष्वेतेषु रेजुः कति कति च नलास्त्राणि, तद्वत्पताकाः,
संख्यावन्तश्चतुर्भिर्दशभिरपि बभुर्वाहिनीरक्षितारः* ।
तत्पश्चाद्रङ्गभूमिं विविशुरथ तथा सादिनो वाजिपृष्ठे
राज्ञश्चिह्नेन युक्तां मरकतखचिते धारयन्तः पताकाम् ॥४६॥
रेजुस्तेषामनु† द्राक्सुदृढमथ लसल्लौहवर्म्मप्रयोगा
मौलावुष्णीषमेवं ध्वजमपि च तथा सैनिकाः सन्दधानाः ।
स्कन्धे भास्वान् चतुर्णां सुदृढदनडुहां रत्नराज्यङ्किताना-
मासीदेको रथोऽपि क्षितिपतिविपुलैश्वर्य्यसज्जासमृद्धः ॥४७॥
तस्मिन् दण्डायमानाः कतिपयपुरुषा रक्तवस्त्रावृताङ्गाः
केऽप्युच्चैर्वंशदण्डोपरि च निजतनुं न्यस्य सन्दृश्यमानाः ।
चर्म्मैकस्मिंश्च हस्ते कठिनमसिलतामन्यदोर्गृह्यमाणां
धृत्वा चत्वार उच्चैः स्फुरितमुखरुचः सैनिकाः संविरेजुः‡ ॥४८॥
द्वात्रिंशत्संख्ययाऽगुर्विलसितगणनास्तत्परं मध्यरङ्गं
वीरा द्राग् आरबीयाः समरभुवि नृणामङ्गरक्षानिमग्नाः ।

---

* नलास्त्राणि—बन्दुक् इति भाषा । चतुर्भिर्दशभिः संख्यावन्तः—*i.e.* चतुर्दशसंख्यकाः देहरक्षकपुरुषा इत्यर्थः । रङ्गभूमिं—सभामण्डपम् ।

† तेषामनु—तेषां पश्चात् ; "पश्चात्सादृश्ययोरनु" इत्यमरः । अन्यत्सुगमम् ।

‡ वंशदण्डोपरीत्यादि—"Two men armed with sword and shield, striding aloft on *stilts* some ten feet high." चर्म्म—Shield. तस्मिन् दण्डायमानाः—तस्मिन्—पूर्व्वश्लोकोक्ते रथे इत्यर्थः ।

तेषामेषां करालं विकृतमथ तथा प्रेक्षणं प्रेक्ष्य सर्व्वैं
के के नासंश्च भीता यदनु गिरिसमं हस्तिमल्लत्रयञ्च * ॥ ४९ ॥
तस्मिन् वाद्यं प्रकाण्डं दशमितपुरुषैस्ताड़ितं यस्य भाण्डं
सृष्टायां धावितानां शतमपि च नृणां संख्यया सप्ततिश्च ।
तत्पश्चात् हस्तिमल्ले कतिपयपुरुषास्तेऽपि मल्लाः समासन्
इत्येषा कच्छभूपस्य च समरकथा या च दृष्टा मया प्राक् ॥५०
एकं "सेरे"ति नाम्ना प्रथितमथ तथा राज्यमन्यत् "मुकाल्ला"
ते द्वे क्षुद्रे च राज्ये जगति निवसतामारबान्तःप्रदेशे ।
तत्सैन्यान्यश्वसङ्घैरनलनलधराण्येत्य रङ्गप्रदेशं
चक्रुर्दर्पेण सर्पं, पुनरपि ननृतुर्वाद्यतालैरुदारैः† ॥ ५१ ॥
चतुःषष्टीर्यष्टीः पृथगिह भटानामथ वराः
भ्रमन्तो घूर्णन्तः पुनरपि पतन्तो विदधिरे ।
रणे निग्रोवाद्यैर्न च रणकथा, केवलममी
जनाङ्के विन्यस्तं सुखमुखमकार्षुश्च हसितैः‡ ॥ ५२ ॥

---

* हार्विमदित्यादि—हार्विमत्संख्यका आरबदेशीयवीराः (The Arabs) अनुसृत । यदनु इत्यादि —येषामनु पश्चात् हस्तित्रयम् आसीदिति शेषः ।

† सेर-मुकाल्लादीनां (Sher and Mukalla) रणसज्जां कथयति (५१-५२) । आरबान्तःप्रदेशे—Sher and Mukalla are two provinces in Arabia. अनलनलाणि—कामानानि, guns and canons. निवसताम्—जनानामित्यर्थः, सम्बन्धे षष्ठी ।

‡ निग्रोवाद्यैः—The African Negroes. सुखस्य मुखं जनाङ्के विन्यस्तम् अकार्षुः, तद्दृष्ट्वा सर्व्वे सुखिनः हास्यरतयश्च बभूवुरित्यर्थः; (Humorously said) ।

महीशूरराज्यात् ददर्शाथ सैन्यं
प्रहृष्टं रणे यस्य किञ्चिन्न दैन्यम् ।
हृतं नीलवस्त्रैस्तुरङ्गासनन्तत्
विजेतुं महीमण्डलं किं समुद्यत् ?* ॥ ५३ ॥

जुनागड़नबाबतो विविधसैन्यमासीन्मुखं
यदीयविकृतं मुखं भयमदात् जनायोन्मुखम्† ।
ततश्च बरदेश्वरान्नृपवराच्च सेनाघटा
गतिं व्यरचयद्रणे परिविभातशौर्य्यच्छटा‡ ॥ ५४ ॥

सुवर्णरजतीकृतं तदपि तस्य यानद्वयं
विनापि वृषनव्ययं वदति राजरिक्थव्ययम् ।
न यानमपरं पुनः क्वचिदभूच्च यानोपमं§
सुवर्णमयमद्भुतं प्रथयति स्म चित्तभ्रमम् ॥ ५५ ॥

यद्वाहितं बलधरैरनडुत्पतङ्गै-
राजादरेण विलसन्मणिरत्नसङ्गैः ।

---

* महीशूरनृपते (Mysore) रणसज्जाप्युल्लिख्यते अनेन । ददर्श—लोक इति शेषः ।

† श्लोकार्द्धेन जुनागढ़ीयनृपतेः (Junágarh) रणसज्जां कथयति ।

‡ अपरार्द्धादारभ्य बरदाधिपते (Baroda) रणसज्जां वर्णयति (५४-५७) । "The *Baroda* section was noteworthy for the gold and silver guns on gilded and silvered carts drawn by bullocks."

§ तद्यानम् उपमा यस्य ; ईदृशमपरं यानं कुत्रापि नासीदित्यर्थः ।

यस्मिन् सुवर्णरचितञ्च नलस्य शस्त्रं*
यद्वाङ्कितेऽपि विलसत्यरमञ्च वस्त्रम् ॥ ५६ ॥
(युग्मकम् ।)

कामानसंज्ञकनलः कनकावदात-
स्तस्मिन् प्रसुप्त इव चारुतरो विभातः ।
मानञ्च सर्व्वनृपतेर्मुखतः प्रपद्य
योऽभीच्छितो रणमुखे प्रबभूव सद्यः ॥ ५७ ॥

बोम्बाख्यप्रेसिडेन्सेर्नृपतिगणभटावेक्षणात् द्रागधस्ता-
द्दासीन्मध्यप्रदेशस्य च मनुजपतेः सैन्यसन्दर्शनं प्राक् ।
सर्व्वाग्रे सिन्धियायाः समजनि नृपतेरागमः सैनिकानां
शौर्य्यैर्वस्त्रैस्तुरङ्गाः परिषदि च गता वाहका नीलवस्त्रैः† ॥ ५८ ॥

तत्पश्चात् होलकारात् युगलशरमितैर्वाजिभिः सज्जिताङ्गै-
र्डिण्डिमवाद्यैरनेकैर्मुखरितमभवत्तत्प्रदःस्थानमुच्चैः ।
दोला स्कन्धे च लोला कनकविरचिता सज्जिता वाहकानां
गात्रेऽप्युच्चैर्भटानां हरिगतवपुषां चर्म्मवर्म्मच्छटा च‡ ॥ ५९ ॥

रेवाख्यान्नीद्दतोऽगात्कटकशतमथ भ्राजमानं सुवर्णै-
स्तस्मादेको रथोऽपि द्वितलपरिचितो, यस्य चूड़ाऽष्टसंख्या ।

* नलस्य शस्त्रम्—नालिकास्त्रम् (Canon) ।

† मध्यप्रदेशीय-(Central India)-रणसज्जाप्रदर्शनी सप्तदशश्लोकैः कथ्यते । तत्रादौ सिन्धियायाः (Scindhia of Gwalior) नृपतेः रणसज्जावर्णनं करोति ।

‡ होलकारनृपतेः (The Holkar of Indore) रणसज्जां वर्णयति अनेन श्लोकेन । हरिगतवपुषां —अश्वारोहिणामित्यर्थः । दोला छटा च—इत्युभयत्र प्रादुर्बभूवेति शेषः ।

दोलाश्रेणी च तस्यां समरभुवि बभौ वेष्टिता वाद्यभाण्डैः

शोभाया बह्वरण्यं जनमुखकुसुमं काञ्चनस्याग्रतोऽभूत् * ॥६०॥

तस्मिन् तुङ्गे तरङ्गे खनिजमणिरुचां, हस्तिपृष्ठे नृदृष्टे

सैकासीत् स्वर्णखट्वा गरुड़मणिरिव, † व्याघ्र एकश्च मूर्द्ध्नि ।

यस्मिन् भेरी पताका ध्वजमपि च तथा वाद्यकृद्वाद्यभाण्डं

तत्पश्चादन्यसैन्यं, तदनु तनुतरास्ते पुनर्हस्तिवर्गाः ॥ ६१ ॥

पश्चादेको रथोऽपि क्षितलपथगतश्चित्रशय्यादिसज्जः,

स्वर्णाढ्या यन्त्रवाद्याः कुसुमकलिकुलैः कोणवन्तो महान्तः ।

मूर्त्तीनां मानवीनां पटगतवपुषां मेखलाशोभितानां

सादृश्यं प्रोद्वहन्तः कविभणितिमुखाद्दूरतो ये विभान्ति‡ ॥६२

विचित्रभूषाऽद्भुतभासमुच्चयः

शतं शतं सैन्यगणाः पदातयः ।

जजृम्भिरेऽस्मिन् भटरत्नसङ्करे

पुनः पुनश्चैव नवप्रभाधरे ॥ ६३ ॥

इयं रथस्याद्भुतचारुदर्शनं

चकार पश्चान्महसा पदार्पणम् ।

---

* रैवाधिपतेः (Rewa) रथसज्जां कथयति (६०-६६) ।

† गरुड़मणिः—Emerald.

‡ कविभणितीत्यादि—*i.e.* Which defies description. ये—गवाक्षा इति यावत् । पटगत-वपुषाम्—वक्षोपरि सूक्ष्माम्बरेण विरचितानामित्यर्थः ।

उदीरितं यच्छकटेति संज्ञया
सुकाष्ठयाऽकारि च यत्सुधिच्छया ॥ ६४ ॥
ततोऽप्यधावत् खलु दन्तिनां द्वय
मुतं परैषाञ्च जनैर्हृष्टहृदयः ।
बहुप्रकारं तुरगप्रदर्शनं
हठादभून्मर्त्त्यनृनेत्रकर्षणम् ॥ ६५ ॥
एकत्र तस्मिन् लघुहस्तिपृष्ठे
कुमार एकः शुशुभे नृहृष्टे ।
निरीक्ष्य तं बालकुसुमस्य वर्षं
सर्व्वे प्रचक्रुः सहसा सहर्षम् * ॥ ६६ ॥
अर्च्चेति नाम्नाऽस्त्ययमल्पदेश-
स्तद्राजतस्ताद्दशयुद्धवेशः ।
'आश्चर्य्यमाश्चर्य्यमिदं' जनानां
जातो रवोऽभूच्च ससैनिकानाम्† ॥ ६७ ॥
बिभ्रच्च रत्नकवचं करिराजराजः
कुञ्जे नृणां मरकतास्तरणो रराज ।

* "The *baby elephant* which made its little sensation in the State-Entry, repeated its success amid loud plaudits."

† अर्चाधिराजस्य (Orcha) रणसज्जां वर्णयति (६७-७१) ।

कर्णेऽस्य कुण्डलमलङ्कुरुते स्म गात्रं
यो दन्तिनां विजयते स्म सुभाग्यपात्रम् ॥ ६८ ॥
दृष्टो बभौ समरसौख्य गिरेः समानः
स्वर्गेश्वरस्य स करीव विराजमानः ।
अर्छाधिराजवरकुञ्जरकुञ्जरस्य*
भूषा तुलां न भजते भुवनेषु यस्य ॥ ६९ ॥
सौवर्णशृङ्खलमुपास्य च तस्य पादं
लोकान्तिकं पतदियाय जनो विषादम् ।
सौवर्णनूपुरघटाऽस्य पदे सरावा
यस्मिंस्तता रजतमण्डलजाश्च भावाः† ॥ ७० ॥
अत्रैव लोकधर्मिनां मिलिते च हट्टे
कुम्भीर एक उदियाय सुवर्णखट्वे ।
अर्छाधिराजकुलचिह्नमिदं गजेऽस्मिन्
जिह्वा च यस्य चपला ज्वलति स्म तस्मिन्‡ ॥७१

---

* अन्तिमकुञ्जरशब्दः श्रेष्ठत्ववाचकः। "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः॥" इति कोषः।

† अस्य पूर्व्वोक्तगजस्य पादमुपास्य सौवर्णशृङ्खलं कर्त्तुं, लोकान्तिकं पतत् बभूव; यदःस्थजनानां समीपे शृङ्खलधारी गजः उपससार इत्यर्थः। ततो हि जनः विषादम् इयाय प्राप, भयादिति शेषः। रव एव रावः, स्वार्थिकः अण्। यस्मिन्—पदे इत्यर्थः।

‡ "Orcha's fish-head emblem with wagging crimson tongue being a great success."

दोलान्तरे करिवरे नवजातरूपे
रेजे कविद्वयमपि ज्वलनस्वरूपे।
रङ्गाङ्गनेऽपि रणरङ्गकरा न भान्ती
विख्याप्यते स्म भुवि येन शुभेति वार्त्ता * ॥ ७२ ॥

ततो दातिया-धार-साम्थार-राज्यात्
तथा चारखारेर्गड़ान्नारसिंहात्।
गड़ाद्राजपूर्व्वादतो सैन्यराजिः
पृथग्वेशभूषावलीभिर्व्यराजि † ॥ ७३ ॥

एको गजश्च ननृते किल दातियातः
भूपं ननाम शिरसा, वपुषा विभातः।
उत्तोल्य पादयुगलं स ततश्च शुण्डं
रत्नच्छटाश्रतविदीपितनीलतुण्डम् ‡ ॥ ७४ ॥

राजगड़हस्तिवरपृष्ठशकटोपरि-
स्वर्णतलसौधि शतधाम्नि करिसुन्दरी।
क्षोभयति सा स्म भुवि दन्तिगणकामदा
हस्तिनिकरानिव सुरूपशतसम्पदा ॥ ७५ ॥

---

* कविद्वयम्—Two Royal Bards. येन—कविद्वयेनेति यावत्। शुभेति वार्त्ता—रणजयमेति:।

† Dátiá, Dhár, Sámthár, Chárkhári, Rájgar, Narasinhgarh - these are all *Central India States* which participated in the procession.

‡ "*Datia* had a dancing elephant whose performance in front of the dáis gave immense delight." भूपम्—*i.e.* कार्ज्जनम्।

एकस्ततो जयपुराद्ददृशेऽथ हस्ती,
स्कन्धे वहन् स सदने रथवैजयन्तीः ।
पश्चाच्च वाजि-गज-वर्म्मितसैन्यशोभा
प्रादुर्बभूव परितो नयनप्रलोभा * ॥ ७६ ॥

शिरोदेशे कृष्णायसरचितकिरीटानि विदधत्
तथाङ्गे वर्म्माणि स्फुरितशतरश्मीनि युगपत् ।
सदर्पं संसर्पत्परिषदि, विकानीरनृपते-
र्बभौ दृष्टं सर्व्वैस्तदिह नितरामुष्ट्रकटकम् † ॥ ७७ ॥

आलोयारनृपस्य चित्रमुदभून्सिंहासनस्यान्तिके
वाजिक्रीडनमङ्घ्रिभङ्गिरचितं तन्मण्डपाभ्यन्तरे ।
एकस्यैव रथोऽपि तत्र ददृशे, यो नुद्यमानः शनै-
र्मातङ्गैर्बलदृप्तनीलवपुषा विस्माययद्भिर्जनान् ‡ ॥ ७८ ॥

---

* सम्प्रति षड्भिः श्लोकैः राजपुतनाख्यप्रदेशीय-(Rájputaná-states)-रथसज्जां कथयति ; तत्रादौ जयपुराधिपतेः रथसज्जामनेन वर्णयति । वाजिगजेत्यादि—64 men in chain-armour, 5 horses and 3 elephants were most conspicuous from *Jeypur*.

† अनेन विकानीरनृपतेः (Bikánir) रथसज्जां वर्णयति । "50 *Camel* sowers in armour from *Bikánir* were vastly admired." सत्—प्रसिद्धार्थे । परिषदि—तत्र सभामण्डपे । तथा अङ्गेऽपि वर्म्माणि विदधत् इत्यन्वयः । "पिक्षं कालायसायसी"त्यमरः ।

‡ आलोयारनृपतेः रथसज्जां कथयति (७८-७९) । "*Alwar's* elephant-car (रथः) was an enormous affair, drawn by four huge animals in chain armour." "Two of Alwar-horses gave a cunning exhibition of hind-leg performances before the Viceregal chairs." विस्माययद्भिः—*Vide* पाणिनिः १।३।६८ ।

क्रोडैः शतं तत्करिणाञ्च वर्णं
प्रपश्यतां हृष्टमभूच्च मर्त्यं ।
हूंराजिवाद्येन च तेन तेन
न विस्मिताः कोऽत्र बभुस्तदेन ? ॥ ७९ ॥

(युग्मकम् ।)

बुन्दीतो ददृशुर्भटान् बहुविधैरुष्ट्रैर्गजैर्घोटकै-
र्वाद्यैश्चापि जना हृष्टहृष्टनघटारावस्वभावध्वनीन् ।
गङ्गाम्भःकलसीं वहंश्च पुरुषो गन्धर्व्वपृष्ठासने
कश्चित् सैन्यगणे रराज वपुषा विद्योतयन् वाहिनीम्* ॥८०॥

कोटा कौटिरुचिं ततान सदसि स्काट्लण्डवाद्यादिभिः
स्नाहेबा अपि यां निरीक्ष्य जहसुः सर्व्वे च तेऽन्ये जनाः ।
नागासैन्यमनन्यविक्रमतया ख्यातञ्च भूमण्डले
दृष्टं तत्र निरातपत्रमभयं स्कन्धे वहत्केतनम्† ॥ ८१ ॥

ब्रह्माख्याद्ददृशुर्मृगेन्द्रकटकान् भूषादिविद्योतितान्
वंशोष्णीषधरानयःशकटगान् स्वर्णादिदोलाम्बितान् ।
तस्मिन्नुच्चकुतूहले करिगले सैन्यस्थले चोज्वले
घण्टाठनठनमुद्बभौ च मधुरं कुत्रापि यन्नेदृशम्‡ ॥ ८२ ॥

* This refers to the horsemen of *Bundi* with the Chief's Ganges water.

† "In the *Kotá*-section the most remarkable feature was half-a-dozen Nágás or military ascetics." स्काट्लण्डवाद्यादिभिः—The famous Scottish Bag-pipes.

‡ ब्रह्मदेशीयरथचक्राणां कणकणनेन । The *Shans* (in Burma) provided a fascinatin~

काशीराजभटास्ततः समगमन्, चित्रो यदाडम्बरो-
बह्वश्वो बहुकेतनो बहुजनो बह्वासनप्रेक्षणः ।
वंशीवाद्यघटा च, सापि मधुरा न क्वापि चैतादृशी
याता श्रोत्रपुटे, निपीय भुवि यां सर्व्वं सदो विस्मितम्* ॥८३॥

टेरीतोऽप्यथ वीरभूमिवलयात्पञ्जाबभूभृतां
शीताद्रेरनुगह्वरात् ददृशिरे सैन्यान्यगण्यानि च† ।
सैन्यानि प्रबभुर्बभौ च रणभूर्झिन्दोरनाभादितः
कामं योधपुराच्च युद्धकुशला रेजुः शिखानां गणाः‡ ॥ ८४ ॥

लोहारोस्थ तथा ततो ददृशिरे टङ्कात् गड़ात् कृष्णतो-
झालोयारमहापुरात्प्रचलिताः केचित् फरिद्कोटतः ।
शोभा हेमरुचा बभूव करिणां हारैरुदारैर्वरै-
रश्वानामपि तद्वदेव महती हेमाद्रिरज्जूद्भवा§ ॥ ८५ ॥
(युग्मकम् ।)

काष्ठां तत्र रणश्रियां भटचयैस्तैर्दन्तिभिस्तैर्हयैः
पस्पर्शार्थबलैर्विजित्य सकलं द्राक् पातियालेश्वरः ।

---

variation with their extraordinary head-dress and sun-shades and the richly blended colours of their dresses." ठन्ठनमिति—Onomatopœic word.

* काशीनरपतेः (Benares) रणसज्जां वर्णयत्यनेन । निपीय—श्रुत्वा ।

† श्लोकार्द्धेन ततः पञ्जाबप्रदेशीय-(The Punjab-states)-रणसज्जां विविच्यति । टेरी—Tehri. ददृशिरे—जनैः इति शेषः ।

‡ श्लोकस्यापरार्द्धेन शिखप्रदेशीय-(The Sikh-states)-रणसज्जां वक्तुम् आरभते । झिन्दोरनाभादितः—*i.e.* Jhind and Nábhá. योधपुरात्—*i.e.* Jodhpur.

§ तामेव शिखप्रदेशीयरणसज्जामनेनापि श्लोकेन स्फुटयति । Lohâru, Tonk, Kishengarh, Jhálwár and Faridkot—these are all *Sikh-states.*

काश्मीरस्य नृपोऽपि कविममुखश्चाजिष्णुलामादिभिः
केथग्राहमकारयत् रणभुवो नृत्यादिवेगव्रजैः* ॥ ८६ ॥

एते† मिथः सुमधुरैश्च तथा विशालै-
रङ्गस्थले ननृतुरेव च वाद्यतालैः।
उल्लङ्घ्य रज्जुमपि दीर्घतरां सुवर्णा-
न्नत्वा नृपं स्वशिविरं ययुरुच्चकर्णाः ॥ ८७ ॥

(युग्मकम्।)

एषैव तत्र खलु भारतभूप्रभूणां
सज्जा रणस्य कथिता विलसद्व्रसूनाम्।
इंराजराजरणखेलनपर्व्व सर्व्वं
सङ्कीर्त्तये दमितशत्रुसमूहगर्व्वम्‡ ॥ ८८ ॥

सज्जाख्या राजकीर्त्तिः समररसघटां नाटयन्ती नवम्याम्
अष्टाहे जानुयारेरजनि गुरुदिने प्रान्तरे दिल्लिभूम्याम्।

---

* शाभ्यां पातियालेश्वरस्य (Pátiálá), काश्मीरराजस्य (Kásmír) च रणसज्जां वर्णयति। "The *Sikh-states* were remarkable for the perfect condition of their men and animals; this is still more true of Patiala; *Patiala's* contingent was almost the *finest* of the entire show." "Indescribable figures of *Kashmiree* dancing musicians wearing *masks* of demonic design were remarkable." काष्ठाम् — पराकाष्ठाम्, चतिशयितां शोभाम्।

† एते—पूर्व्वश्लोकोक्ताः कविमसुखधारिणः लामादय इत्यर्थः।

‡ अधुना इंराजसैन्यानां रणसज्जां (THE REVIEW OF TROOPS) कथयति (८७-९१)। "On the 8th January, a Grand Review of the whole body of troops assembled was held on a level plain in the vicinity of the Camps. There were present about 34,000 troops of all ranks under H. E. The Commander-in-chief."

यत्राभूत् स्तम्भ एको नरपतिरचितः केतनाडम्बरीतो *
दाम्ना भूषावलीनां रथ इव चमरीपुच्छतन्तूपवीतः ॥ ८९ ॥
घण्टानृत्यश्च तस्मिन् व्यरचयदभितोऽवेतनो विश्ववायु-
र्हस्तेनेवाजुहाव क्षितिनगरजनं वैजयन्तीपटेन ।
सर्व्वाः सेनाश्च तत्र प्रतिनिधिमभितोऽभ्यन्तरे भक्तिभावा-
दागत्यागत्य शश्वत्परिणतशिरसा क्षेमुरेनं प्रणेमुः† ॥ ९० ॥
चञ्चच्चूडाकिरीटद्रुतगतिरभसोद्भिन्नरक्तच्छवीना-
मेकत्रापातवेगध्वनितदशदिशामश्वपृष्ठे चमूनाम् ।
कामानानाञ्च तद्वृषगतवपुषां, तत्र पादातनॄणां
पश्यन्तो दर्पसर्पानपि च जनगणा विस्मिताः के न जाताः? ‡
॥ ९१ ॥
राजादेरर्घयोगात् बृटिशपदनताः सैनिकाः केचिदन्ये
येषामग्रे प्रतस्थे रसनटनपटुः पातियालेश्वरादिः ।

---

* स्तम्भ एकः—Refers to the Flag-post or the Grand-stand on which the Royal Standard hung, before which, line after line of horse, foot, artillery filed. प्राजरे—*i.e.* On the Review-ground (*vide* Stanza 26, Canto II).

† All the troops while marched past, saluted the flag, and His Excellency the Viceroy. आजुहाव—अर्थाभावादात्मनेपदम् ।

‡ "Those who saw the review will never forget the Gallery of picturesque and stirring pictures it presented." 'दर्पसर्पा'नित्यस्य पदस्य—चञ्चच्छवी-चमूनां, कामानानां, पादातनॄणाम्—इति प्रत्येकमन्वयः। आपातः—परिपतनं, धावनमित्यर्थः। वृषगतवपुषां—वृषपृष्ठे स्थापितानाम् ।

येषां संख्यैव नासीत्, समरभुवि पुनः साहसोज्जृम्भितानां
तेषां कैवात्र वार्त्ता? विलिखितमपि किं? का कथा वर्णनीया?*
॥ ९२ ॥

"पलो"नाम्नी क्रीड़ा समरसदृशी कौतुकमयी
सदा विख्याता या सुखशतमुपेता निजगुणैः ।
समारब्धा साऽभून्नवमहनवाहेऽद्भुततरा
यदीक्षायामस्यामहमहमिकां नेयुरथ के ?† ॥ ९३ ॥

ससज्जं तत्पत्तद्वयमिह मनोमोदमदधात्—
पुरालोयारास्ते धृतपरिकरा योधपुरिभिः ।
परः पक्षस्तस्या—मणिपुरभटेनैव सहिता
विलोचीस्थानस्था दृढ़वसनकच्छा भुवि बभुः‡ ॥ ९४ ॥

---

* This stanza describes the review of the "Imperial Service Troops," who filed past in alphabetical order. "The contingents from Alwar, Bhupal, Bikanir, Gwalior, Jhind, Nabha, Patiala and Sirmur were led past by their chiefs or other members of the ruling family." पातियालेश्वरादिः— Compare :—"At their head their boy chief, the eleven years old Maharaja, clothed in samite and pearls of great price, bearing himself with surprising dignity."—*Englishman.* राजाद्यैः—भारतीयनृपाणाम् । सैनिकाः— समवेतार्थद्योतनत्वात्पुंलिङ्गता ।

† शेषदिवसे सम्पादितां "पलो"नाम्नीं क्रीड़ां (THE POLO-TOURNAMENTS) किञ्चिदपि कथयति (९९—१०२) । "Enormous crowds of spectators assembled this afternoon (Jan.9) to witness the *last series* of Games on the Polo-ground." "For the first time in Indian history might be seen on the same ground the Game of Polo, as still played in the remote mountain states of Hanza and Nagar on one side of India and Manipur on the other, and as *borrowed* from them and developed by the English."—*Despatch of 12th June 1903.*

‡ तत्रादौ प्राथमिकां क्रीड़ायाः परापरपक्षान् निर्दिशति (९४-९५) । "Four games were in

इह क्षेत्रे भूयः प्रणयनिरतः कूर्दनपरः
पुरा गिल्गिट्वासी हयशिरसि पक्षोऽयमपरः ।
जनानामानन्दं मनसि सृजता चित्रलभुवा
नृणा सार्द्धं, येनाविरभवदसौ क्रीड़नयुवा* ॥ ९५ ॥

अहो धावन् घूर्णन् दिशि दिशि सरङ्गं स्वयमटन्
तदालोयाराणामधिपतिरपि भ्रमति हये ।
विपक्षे सङ्क्षोभं, महति निजपक्षे जयमुदं,
जनानामौत्सुक्यं हृदि च, जनयामास युगपत्† ॥ ९६ ॥

जयादालोयारा मिलितवपुषो योधपुरिभिः
समाजग्मुर्हर्षध्वनिमथ चलल्लोहगुटिकाः ।
इयं क्रीड़ा व्रीड़ामनयदपरेषां हृदि पुरा
विपक्षाणां पक्षः स च समरदक्षोऽपि न जयी† ॥ ९७ ॥

(युग्मकम् ।)

---

progress, namely :—(1) Polo, between Manipuri teams and Baluch teams ; (2) Polo, Chitral *vs.* Gilgit ; and (3) the final in the international Polo between Alwar and Jodhpur ; and (4) Football."—*Englishman.*

* अयं क्रीड़नयुवा युवकजनोचितक्रीड़ेति यावत् आविरभवत्प्रादुर्बभूवेत्यर्थः । चित्रलभुवा—चित्रलप्रदेशः भूर्जन्मस्थानं यस्य तेन । [illegible] जातावेकवचनम् ।

† पश्चात् निर्दिश्याधुना तामेव क्रीड़ां वर्णयति । तत्रादौ द्वाभ्यामालोयारीययुवकाभ्यां क्रीड़ा वर्ण्यते । The International Polo-tournament was won by the Alwar-team. "Alwar won easily by 7 Goals and 5 Subsidiaries, the Maharaja of Alwar playing brilliantly."—*Englishman.* विपक्षाणां पक्षः— *i.e.* योधपुरीयः पक्षः ।

अहो ! ह्रस्वा वीरा मणिपुरभुवः कुर्हनबुधा
निषङ्गाद्यैर्युक्ता लघुलघुतुरङ्गेऽल्पतनवः ।
तुरङ्गास्तद्वाहा ह्रयमपि पुनर्वामनवपुः
कृतास्फालं सालङ्कृतमनयदाक्रीड़नपदम् * ॥ ९८ ॥

पलोक्रीड़ासृष्टिं प्रथममिव ते संव्यरचयन्
'जनाः कोऽमी'त्येवं ध्वनिमुपगता विस्मयपरैः ।
जनानन्दं चक्रुः परबलजयं ते च विदधु-
र्भ्रमन्तः स्वैर्वेगैर्धवलतरधूलीधवलिताः† ॥ ९९ ॥

साहाय्यं वावलम्ब्य समरभुवि ह्रयारोहणादिक्रियायां
नेमे सम्प्रार्थयन्ते रणमुखमुखराः सिंहदर्पं दधानाः ।
ह्रस्वा देहेन सत्यं रणशिरसि पुनर्विक्रमैर्दीर्घदीर्घाः
स्वाकारैर्नैव कार्य्यं फलति, फलति तत्केवलं विक्रमेण‡॥१००॥

(विशेषकम् ।)

---

* त्रिभिः मणिपुरीयपुरुषाणां क्रीड़ा वर्ण्यते । "The Manipuris played the game 6 a side. The players made a pretty sight and played a good fast game in spite of the *small size* of their ponies." तद्वाहाः—अश्वारोहिणः ; चर्मधराः ।

† "The Manipuris may be said to be the *originators* of the game of polo. They are awfully smart and swift players." *Vide* also the extract from the Govt. of India's Despatch given under stanza 93.

‡ The peculiarity of the Manipuri game was the pigmy ponies and their pigmy riders in *Dhoti* riding *without saddle* of any sort.

विलेखाच्चित्राङ्कैः सिचयनिचयैश्छन्नवपुषो
मुदा येऽल्पीयस्यां भुवि तुरगरङ्गे द्रुतरयाः ।
विलोचीस्थानस्था उडव इव शुक्लद्युतिधरा
नरा वीरा घोराकृतय इह ते ते ददृशिरे* ॥ १०१ ॥

शीर्षं तेषाञ्च तुङ्गं शिखरिशिखरवत् डिम्बवच्चापि गोलं
केशा हस्तद्वयादप्युपरि ददृशिरे व्यायता लम्बिताश्च ।
तेषूष्णीषाश्च तावत्कतिपयशिरसि स्थानमासाद्य तुङ्गे
ग्राव्णां चित्रामभिख्यामिव परिविदधुर्दीर्घवल्लीघटाभिः ॥१०२॥
(युग्मकम् ।)

एतत्सर्व्वमदर्शि सर्व्वमनुजैः श्रीकार्ज्जनानुग्रहात्
तद्दृष्टं, भुवि यन्न दृष्टमभवत् कुत्रापि केनापि च† ।
जातं प्राक् च निवेदनं प्रतिजनं, दत्तं समामन्त्रणं,
सिद्धं तेन परस्परप्रणयभाक् सम्मेलनं खेलनम् ॥ १०३ ॥

---

* द्वाभ्यां विलोचीस्थानीयपुरुषाणां चित्रलपुरीयाणाञ्च क्रीड़ा वर्ण्यते । The Beluchis, in their long flowing garments, with their wild looks, riding unkempt Beluch ponies which rivalled in speed and dash any of the ponies used by the Europeans, were really a sight to see. अल्पीयस्यां भुवि—"Chitral and Gilgit teams played a match on a curious *narrow ground*. The players 6 on each side showed great skill, their ponies galloped well and showed wonderful staying power."

† This line speaks of the *combined* magnificence and variety of display which *brought together*, in their national dresses or garbs of state, figures *widely separated* by race and residence.

एवं साम्राजसभास्थले कतिपये मानादथाह्वानिता
राजानो विविधैः सुवर्णफलकैर्लब्धप्रसादा बभुः।
लेभे काममुपाधिरत्नममलं यस्मिन् निजामेश्वरः
कैः कैस्तैरपि सार्द्धमृद्धविभवैः शेषे दिने शोभने * ॥ १०४ ॥

पर्व्वेति दिल्लीगामिह सर्व्वतोमुखं
सुखं वितन्वत् पुनरप्यवाङ्मुखम् † ।
चन्द्रो यथा हेमगिरेर्विभागतः
समाप्तिविश्रान्तिसुखं समागतः ॥ १०५ ॥

एतद्दिल्लिमहोत्सवस्य चरितं प्रव्याहृतं स्थूलतो
दिङ्मात्रं, न हि शक्यते खलु मया वक्तुञ्च सम्यक्तया।
यच्चोक्तं यदि तत्र सम्भवति मे दोषस्तथाऽसङ्गति-
स्तत्क्षन्तव्यमनुग्रहैर्बुधवरैर्यः प्रव्रजेत् स स्खलेत् ॥ १०६ ॥

इति श्रीश्रीश्वरीये दिल्लिमहोत्सवे खण्डकाव्ये अग्निक्रीड़ादि-
विविधमहोत्सवाङ्गकृत्यवर्णनो नाम पञ्चमः सर्गः।

---

* This stanza refers to the EVENING PARTY given by His Excellency to the Ruling Chiefs on the evening of the 9th January, at the Viceroy's Camp. "On this occasion an *investiture* was held at which H. R. H. the Duke of Connaught invested the Nizam of Hyderabad with the grand cross of the order of the Bath and the Maharaja of Kolhapur with the grand cross of the Royal Victorian order." सुवर्णफलकैः—H. R. H. also presented *gold-medals* to various Chiefs, who had attended His Majesty's coronation in England.

† पुनरपि अवाङ्मुखमभवदिति शेषः। पर्व्व—दिल्लिमहोत्सवः।



# षष्ठः सर्गः ।

आसीत्पूर्व्वमियं हि भारतधरा सम्लेच्छजनाकरा
प्राच्यास्तां प्रतिपेदिरे विदधिरे प्रागार्य्यवंश्या नराः ।
वंशे चापि युधिष्ठिरस्य नृपतेर्ध्वंसङ्गते कालतः
सा हिन्दोः करगा, ततश्च परगा, किञ्चित्तदुक्तिं ब्रुवे * ॥१॥

आरावल्लीशिखरिशिखरं पश्चिमे दिग्विभागे
पूर्व्वं यस्याः शमनभगिनी निम्नगा सूर्य्यपुत्री ।

---

* दिल्लिनगर्य्याः प्राचीनेतिहासं (Past brief history of Delhi) प्रस्तौति । म्लेच्छजनाकरा:—Refer to the earliest inhabitants of the country, called the aborigines, as well as to the Scythians or Tartars who had also begun to move into India before the dawn of history. प्राच्या आर्य्यवंश्या:—*i.e.* The Aryan race who came into India in pre-historic times. हिन्दोः:—*i.e.* of the Hindus, such as the Rájputs ; ततश्च परगा—Refers to the Musalmáns and the English.

हिन्दूनां या चिरपरिचिता सर्व्वभूसार्व्वभौमा
या चासीत्प्राक् नृपतिनगरी प्रेमदा राजराजेः* ॥ २ ॥
सैषा दिल्ली दृढ़तरदृषन्मेखलावेष्टनाढ्या
गुर्व्वी या यस्या भुवि सुषमया विस्मयन्ते धनाढ्याः ।
भूपानां या द्रविणमहतामुन्मवादैर्विधात्री
शोभास्रग्भिः खचितवपुषो मन्दिराद्यैश्च प्राची† ॥ ३ ॥
आसीत् यस्यां विजितभुवनं पाण्डवं राजसूयं
भूपा यस्मिन् विधृतबलयो वारिता द्वारि तस्थुः ।
यस्यासन्ने विलसितमभूत् भारतं युद्धकाण्डं
शून्यीभूतं नृपतिनगरं यत्र भूपैरकाण्डम्‡ ॥ ४ ॥
आसृष्टेरियमुत्तमेव वनिता नित्यं पुराणी नवा
या पूर्व्वं मणिरत्नकाञ्चनवती राज्ञां स्म राजायते ।
इन्द्रप्रस्थमुखे च राजनगरे काले विलुप्तिं गते
तत्कङ्कालमयेष्टकां विदधती या शोचनीयाऽभवत्§ ॥ ५ ॥

---

* दिल्लिनगर्य्याः सन्निवेशविशेषं कथयितुं तस्या अवस्थानं सूचयति । "Delhi occupies a broad plain bounded by the river Jumna on the east, the northernmost spur of the great Aravelli range of mountains on the west." नृपतिनगरी—राजधानीत्यर्थः ।

† प्राचीनकालादारभ्य वर्त्तमानकालपर्य्यन्तं दिल्ल्या इतिहासं सङ्क्षेपेण वर्णयितुम् आरभ्यते (२—४६) । "This historic plain (*i.e.* Delhi) since Hindu-times has been thought to be peculiarly favourable for the erection of a great city."

‡ आश्चर्यं कुरु-पाण्डवयुद्धादिकं कथयति ।

§ राजायते—राजेव आचरति इति क्यङ्, "क्यङ् मानिन्योश्च" इत्यनेन पुंवद्भावश्च, नलोपश्च । तत्-

बौद्धानां या स्मृतिशतमयी भूम्नतां स्तम्भशोभा-
मद्याप्युच्चैर्वहति तिमिरग्रस्तपूर्व्वेतिहासा ।
काले पश्चादियमधिगता राजपुत्राख्यभूपान्
कीर्त्तिं तेषां प्रथयति चिरं मन्दिरैश्चिह्नशेषैः * ॥ ६ ॥

स्तम्भो यस्यां लसति यमुनावेगदृष्टस्तथैको
हिन्दूद्भूतः स, कुतुब-मिनर्-ख्यातिमानप्यधस्तात् ।
चूड़ा यस्य स्पृशति गगनं, यस्य दीर्घोऽप्यनर्घ्यः,
पृथ्वीराजक्षितिपरचितः किंवदन्तीति यस्य† ॥ ७ ॥

---

कल्पालित्यादि—"The ruins of *Hastinápur* are pointed out 57 miles north-east of Delhi, at this day."—*W. W. Hunter.*

* दिल्लिनगर्याः शैवहिन्दुनृपतीनां किञ्चिद्विवरणं ददाति । "The authentic history of Delhi can hardly he said to begin before the end of the 12th Century A. D." "It is supposed by Cunningham and others that the original Delhi was built by Ananga Pál II. of Tamar *Rajput* tribe, which was overthrown by another Rajput tribe, the Chauhans, in the middle of the 12th century."—*Keene's Handbook of Delhi.* बौद्धानामित्यादि—There are still an Edict of Aśoka at Delhi and other Buddhist temples. राजपुत्राख्यभूपान्—The Rájputs.

† "The Chauhán Rajputs, after a reign of 40 years, were overthrown by the Musalmáns under Mahammad of Ghor and his general Kutab-ud-din in 1193. Prithvíráj was the last of the *Chauhán Dynasty.*" स्तम्भः—Refers to the *Iron-pillar* that stands in the quadrangle of the Mosque, which is the oldest relic of Hindu Dynasty. अधस्तात्—परवर्त्तिनि काले, दासनृपतीनां राजत्वकाले । कुतुब-मिनर्—One of the loftiest minarets of the world. Here lies the remains of Prithvíráj. For this "*Iron-pillar*" and its *Hindu Origin, vide* "Journal of the Asiatic Society for Bengal," Vol. 33, 1864, and also the letter written by Sir Syed Ahmed of Aligarh to Col. Cunningham in "Cunningham's Archœological Survey of India," Vol. IV.

अन्तर्भेदव्यसनपतिते भारतीये नृपौघे
यासीत्पश्चादहह ! जवनस्रोतसा प्लाविताङ्गा ।
राज्ञां घोरीकृतरणमखे दत्तदेहाहुतीनां
याऽद्याप्युच्चैः पतनकलुषां शेषकीर्त्तिं वहन्ती* ॥ ८ ॥

एवं दिल्ली जवनकरगा विच्युता हिन्दुहस्ता-
दन्तर्द्रोहैरविनयशतैः पीड्यमाना समन्तात् ।
आसन् यस्यां त्रिशतशरदं व्याप्य लब्धप्रवेशा
आफगानाख्याः खिलिजि-तुगलाद्याश्च भूपाः क्रमेण† ॥ ९ ॥

(षड्भिः कुलकम् ।)

खृष्टाब्देऽङ्कयुगाधिके च विमले पञ्चैकमाने शते
बाबरस्य समागमादथ पुरा वर्षे ततो भारते ।
स्कन्धावारनिवेशदुर्गधवला सा राजधान्युज्ज्वला
दिल्लीयं नवरत्नविग्रहवती देदीप्यमानाऽभवत्‡ ॥ १० ॥

---

* हिन्दुनृपकराद्दिल्ल्या विच्युतिः जवननृपकरगतत्वञ्च (Mahomedan Conquest of Delhi) कथ्यते । घोरीकृतरणमखे—This refers to the battle of 1193 where Prithví-ráj was defeated by Mahammad Ghorí and slain. By this battle, Delhi passed to the hands of the Musalmáns.

† After the conquest of Mahammad Ghorí, Kutubuddin, his Viceroy, founded a line at Delhi which lasted from 1206 to 1290; then followed up to the year 1526 the Houses of Khilliji, Tugluck and Lodi, when Babar, the first of Mogul Dynasty, invaded India. त्रिशतशरदम्—त्रिशत-संख्यकवर्षम् (From 1206 to 1526) ।

‡ अधुना दिल्ल्याः मोगलनरपतीनां (The Mogul Dynasty) विवरणं ददाति किञ्चित् (१०—४०) । "A number of capitals and fortresses had been built in this plain before the advent of **Babar** in 1526 A. D. and their ruins are still visible."—*Káyastha Samáchár.*

आसीत्प्राक् यदिदन्तु मोगलनृपस्योपासनामन्दिरं
दुर्गाग्रे भुवि यच्च संस्थितिमितं तस्य, श्रियाधिष्ठितम् ।
बद्दश्यं दृढदुच्चचूड़ममलं पार्श्वैस्त्रिभिर्हूरतः
पश्चात् रामपुरस्य संस्कृतमभूत् यत् सन्नवाबादिति * ॥ १७ ॥
(युग्मकम् ।)

दिल्लयां दुर्गं प्रथयति यशः साजहानस्य यद्वत्
साग्राभूम्यां जयति च तथाऽट्टालिकामूर्त्तिरन्या ।
चारूद्याने नवशशिकलां ह्रेपयन्तीव धाम्ना
नाम्ना चापि क्षितितलनृणां श्रोत्रयोर्ह्लादिनीव † ॥ १८ ॥

तद्भूपालविशालकीर्त्तिकुमुदिन्येषा चिरस्थायिनी
ताजेति प्रथिता श्रियं विदधती साऽट्टालिकाचन्द्रिका ।
यां द्रष्टुं मनुजाः प्रयान्ति सततं चाद्यापि लौहाध्वना
दर्पस्पर्शविमर्षहर्षकलुषा वागत्र श्राचा क्षता ॥ १९ ॥

---

into existence immediately after." श्वेतत्यादि—"It is a building of *red* sandstone inlaid with marble, and some portion is built exclusively of *white* marble."

* उच्चचूड़ेत्यादि—Refers to its tall and graceful minarets. The Mosque has lately been repaired by the Nawáb of Rámpur and that of Bhawalpur.

† आग्रायां विनिर्मितं ताजमहालाख्यमन्दिरं (The Tájmahál of Agra) प्रबन्धतः वर्णयति (१८—१९) । दिल्ल्यां दुर्गम्—"The palace at DELHI, now the *Fort*, covered a vast parallelogram, 1600 ft. by 3200, with exquisite and sumptuous buildings in marble and fine stone." "At AGRA, he raised the exquisite mausoleum of the Tájmahál, a dream in marble, 'designed by Titans and finished by Jewellers'."—*W. W. Hunter.*

सौधोपर्य्यसमाप्तयौवनकथा भास्वद्दृषत्पीवरी
विक्रीडन्मणिरत्नजाललहरी येषा पुरां सुन्दरी ।
नारीणामिव चन्द्रबिम्बधवला विद्याधरी खेचरी
किंवा भूतलवासिनी द्युनगरी कारुक्रियाडम्बरी* ॥ २० ॥

येषा गन्तुः सुखयति पदं पीनसोपानजालै-
स्तुङ्गानन्दान् जनयति तथा हस्तचूडावतंसैः ।
रत्नद्वारा दृषदि कुसुमैः चोदितैरङ्गनाङ्के
नानाच्छायाग्रथितवलभि†र्या च जाज्वल्यमाना ॥ २१ ॥

भूमीमूलाद्विमलसलिलैः प्रार्थनाकाललब्धै-
रुच्चैः स्तम्भोपरि परिगतैः पार्श्वयोर्हर्षदात्री ।
मुक्ताश्रेण्या प्रकटितवलिश्चारुसर्व्वाङ्गशोभा
दिव्याकारा जयति भुवने येयमभ्रंलिहाग्रा ॥ २२ ॥

बद्धौ मुद्रा रथमिव तनुं सम्यगालम्ब्य हैमी‡
याग्रोद्याने हसति सुषमामन्यदीयां विजित्य ।

---

* नारीणामिवेत्यादि—Compare :—"The Táj was meant to be *feminine.* The whole conception, and every line and detail of it, express the intention of the designers. It is Mumtájmahál herself, radiant in her youthful beauty, who still lingers on the banks of the shining Jumna, at early morn, in the glowing mid-day sun, or in the silvery moon-light."—*E. B. Havell, in the "*NINETEENTH CENTURY*, June 1903.*

† वलभिः—*i.e.* The Turret.

‡ बहुधनव्ययेन निर्म्मिताऽसौ, अतएव हैमी मुद्रेव तनुमालम्ब्य स्थिता, विचक्षणो यथ स्थितेत्युत्प्रेक्षा ।

तुर्य्यस्तम्भैः* स्थिरयशसि सिता पार्श्वयोरुच्चलाङ्गी
सौधाद्र्यौ शिरसि शशिभृत् मूर्त्तिमत्कारुकीर्त्तिः ॥ २३ ॥
भूमीकम्पं गणयति न या ग्रावलेखादृढाङ्गा
विद्युत् यस्याः प्रणमति पदं दूरतो गर्ज्जमाना ।
नेयं यस्मात् मृदुलकदली, नापि वंशादिभाण्डं,
मानादग्रे जगति महतां के न नम्रा भवन्ति ?† ॥ २४ ॥
कांस्ये कांस्यध्वनिरपि यथा दीर्घकालावलम्बी
नृणां कण्ठध्वनिरपि तथा यत्र वद्धो विलम्बी ।
छाया भास्वन्मुकुरपतिता यत्र चैकापि नृणां
कायव्यूहैरिव बहुतरा कारुबुद्धेः प्रयोगात्‡ ॥ २५ ॥
प्राचीरस्य प्रथितयशसो गौरवं लङ्घयन्ती
चीने§ पीनद्युतिशतवतो दीर्घमायुः प्रविष्टा ।

---

* तुर्य्यस्तम्भैः—चतुर्भिः स्तम्भैः ।

† गर्ज्जमाना—"ताच्छील्यवयोवचनशक्तिषु चानश्" इति सूत्रेण ताच्छील्ये चानश्प्रत्ययः । नापि वंशादिभाण्डं—वंशनिर्म्मितभाण्डवत् इयं न मृदुदेहा इत्यर्थः ।

‡ मन्दिराभ्यन्तरे नृणामालापजनितः शब्दः प्रतिध्वनिवशाद्दीर्घतरः प्रतीयते इति तत्र ताजमन्दिरे गत्वा परीक्षितमस्माभिः, तदेव कविः कथयति । This phenomenon reminds one of the "Whispering Gallery" of St. Paul's Cathedral of London. एकापि छाया—मुकुरेषु पतिता नृणाम् एकैका प्रतिकृतिः प्रतिबिम्ब इति यावत्, बहुतरा दृश्यते स्म इति भावः ।

§ चीने प्रथितयशसः प्राचीरस्य—*i.e.* The famous China-wall. "Every one who has seen the Táj must have felt that there is something in it, difficult to define or analyse which *differentiates it from all other buildings* in the world."—*Nineteenth Century, June 1903.*

चूड़ां यस्या हिमकरकरैर्भासितां सर्व्वकाले
क्लेशावेशैरटति नितरां द्रष्टुकामा चकोरी ॥ २६ ॥

नीतो यस्या मरकतवलिर्हन्त ! नन्वेव सास्ते
शोभा तस्याः द्युतिततिमती सा न नष्टा तथापि ।
मुद्राश्रेणी* जगति दधती सौधमूर्त्तिं सुवर्णा-
मुद्याने वा द्युपुरयुवतिः सौधसिंहासनस्था ॥ २७ ॥

दूराद्दृष्टोत्तमाङ्गा गरुड़मणिरिवालिङ्गित श्रीन्दुकान्त्या
पार्श्वे यस्यास्तथोच्चैर्धवलितकिरणा भ्राजतेऽट्टालिकाली ।
पादं यस्या विभातः स्पृशति गुणगुरुर्दक्षिमार्गः सवातो
भङ्गः कालिन्दनद्या निकटपथमटन् सोऽप्यमुष्यां विभाति†॥२८

केनेयं, कस्य कीर्त्तिः, कथमियमुद्भूत्, किन्नु वा, का च नाम्ना,
का वाऽस्याः किंवदन्ती, कतिकतिदिनतः कारिता, कश्च कारुः?‡
इत्येवास्याश्च शश्वन्नगरनगरतः काकली कीर्त्तयमाना
स्थाने स्थाने समन्तान्नृविहगनिवहात् श्रूयतेऽद्यापि यस्याः॥२९

(द्वादशभिः कुलकम् ।)

---

* नीतः—नादीरशाहादिभिः (Nádir Sháh) नीतः लुण्ठितः । मुद्राश्रेणीत्यादि—*Vide* notes on stanza 23 above.

† गरुड़मणिः—Emerald. कालिन्दनद्याः—यमुनायाः, भङ्गः—तरङ्गः ।

‡ "The artistic history of the period and the style and workmanship of the Táj all testify to the *falseness* of the theory that *Europeans* directed the design of the building."—*The Nineteenth Century, June 1903.*

साजेहानाख्यसम्राट् तदिदमरचयत् नामतो यन्मयूरं
रत्नग्रामैर्महार्हासनमतिरुचिरं विस्मितं येन विश्वम् ।
पक्षे पक्षे च मुक्तां समधिककिरणास्ते मयूरा दधाना
नानाज्योत्स्नाङ्किताङ्गा इव विरुरुचिरे रत्नराजिं वहन्तः* ॥३०
आश्चर्य्यं तन्मयूरासनमिह विदितं सर्व्वरत्नप्रधानं
यत्तद्रत्नच्छटाभिर्दिशि निशि तिमिरे दीपदर्पं विधुन्वत् ।
चत्वारो यन्मयूरा विकसितगरुतो रत्नसारैरुदारैः
सम्यक् तत्पश्यतां ये स्वकिरणरजसा चक्रिरे नेत्रमुद्राम् ॥३१
सम्राट् तस्मिन् मयूरासनशिरसि लसद्रत्नगुञ्जानिकुञ्जे
पुञ्जे नक्षत्रभासां समधिकहृषदां सन्निषण्णः पुरासीत् ।
हर्षज्योत्स्नाच्छटाभिः कुसुमविपिनभाक् सुन्दरीभिर्नरीभि-
र्ब्रह्मानन्दं प्रपेदे नृनयनमधुभिर्वेष्टितो हास्यलास्यैः ॥ ३२ ॥
(विशेषकम् ।)

वृद्धे तस्मिन्नथ नृपवरे साजहाने तदानी-
मारङ्गेवं स्वकरकमलं ग्राहयामास दिल्लिः ।
सोऽयं सम्राट् भुवनविदितः प्राप्य तां राजलक्ष्मीं
शोभासम्पत्स्फुटगुरुरुचिर्दुर्न्निरीक्ष्यो बभूव† ॥ ३३ ॥

* प्रस्तुतः साजेहाननिर्म्मितं मयूरासनमपि (The Peacock Throne) वर्णयति त्रिभिः(३०-३२)। "His *Peacock Throne,* with its tail blazing in the shifting natural colours of rubies, sapphires, and emaralds, was valued by the Jeweller Tavernier at 6½ millions sterling."—*Hunter.*

† **Aurangzeb** lived at Delhi for nearly 20 years, holding his court with oriental magnificence in the palmiest days of the Mogul rule.

भूमौले मोगलानां तदवधि परमा ऋद्धिरव्याहतासी-
दासीत् दिल्लप्रादिकीर्त्तिर्नवभवनघटाभूषिता चापि धात्री ।
येषामद्यापि लोके वहिरनुसरणं गीयते दुर्गमध्यात्
राजन्यानामरण्यैर्ध्वजसहितगजैरग्रगैर्भ्राजमानम् * ॥ ३४ ॥
ऐश्वर्य्यस्यातिशय्यात्पतितमपि तदा लोकसङ्घर्षणाद्यैः
खण्डं हेम्नां न केनाप्यभिहृतमुदभूत्केवलावश्ययैव ।
यादृक् तन्मृन्मयाणां दलबलसहितं मोगलानां नृपाणां
तादृक् कस्यापि नाभूत् भुवनजनपतेर्भारते दृष्टपूर्व्वम् ॥ ३५ ॥
दोलारत्नं व्यवहृदमलं वाहकानाञ्च रत्नं
सम्राड्रत्नं यदुदरगतं रत्नराज्यंशुकौघैः ।
नारीरत्नैः क्वचिदपि च तद्भूभृतां यानरत्नं†
भास्वद्यत्नं समधिकमभून्मर्व्वभूपालकेभ्यः ॥ ३६ ॥
(विशेषकम् ।)

येषां वंशे कुसीदग्रहणमपि सदा शास्त्रतः स्यान्निषिद्धं
प्राप्यो भूम्याः करः पर्य्युषितकुसुमवत्प्राभवद्वन्धरान्ते ।

* The poet now describes by three stanzas the magnificence and splendour of Delhi under the Mogul rule and speaks of the *Royal Procession* of the Mogul Emperors from the Fort to the Jumma Masjid. दुर्गात् वहिरनुसरणम्—*i.e.* The Royal Procession on a Friday. ध्वजसहितगजैरित्यादि —"The Emperor was seated in a palanquin with one of the princes riding a-breast on horseback preceded by four elephants bearing the Royal Standard. Behind followed the nobles on foot with their silks, satins and brocades."—*Káyastha Samáchár.*

† यानरत्नम्—*i.e.* The Grand Royal Procession. तद्भूभृताम्—मोगलनरपतीनामित्यर्थः ।

राज्ये तद्दुष्टनामां त्रुटिरणुरपि वा न, प्रजानां जनानां—
दिग्द्रोणं धान्यमासीत् क्रयभुवि विपणावेकमुद्रार्पणेन * ॥३७॥
आरङ्गेबे ततोऽदः समधिकमभवत् मोगलानाञ्च राज्यं
निर्वाणारूढदीपस्फुरणमिव हठाद्द्वेषणेनैव हिन्दोः ।
अभ्युत्थानं समन्तात्,—पतनमपि तथा राज्यनामेन्द्रिराया
हिन्दोर्विद्वेषमूलं, जवननरपतेर्हन्त ! भुभारतेऽस्मिन् † ॥३८॥
आरङ्गेबापमानं शिवजिनृपभवं विश्रुतं चेतिहासात्
सैन्यावासप्रवासक्षपितबहुदिनं निर्जितं हन्त सैन्यैः ।
क्वाल्पीयः शैवसैन्यं, क्व च जवनपतेर्वाहिनी भ्राजयन्ती ?
येऽत्यन्तं हृद्धिमाप्ता ध्रुवमिति वचनन्ते खलास्तः पतन्ति ! ‡ ॥३९
वाहादूरः स शेषो जवनकुलभुवां राज्यभाजां नृपाणां
यस्मिन् विद्रोहवह्निर्भटजनमरुता प्राज्वलद्देशमध्ये ।

* छविः श्रीकैर्मोगलनरपतीनां बहिर्निष्क्रमणं (Royal Procession) उद्दिश्य, अनेन श्रीकैस् तेषां करग्रहणप्रथां द्रव्याणां सौलभ्यं कुसीदग्रहणादिकमपि प्रदर्शयति । श्रेषाम्—मोगलनरपतीनामित्यर्थः ।

† अधुना छविः मोगलसाम्राज्यस्य पतनेतिहासं कीर्त्तयति । "Akbar had rendered a great empire possible in India by conciliating the native Hindu race. Under Aurangzeb and his miserable successors this *policy of conciliation* was given up."—*W. W. Hunter.*

‡ "In 1670, the Marhatta leader *Sivaji* levied *chauth* as tribute from the Mogul Provinces in Southern India and crowned himself as independent Sovereign." Aurangzeb prepared an expedition on an unrivalled scale for the conquest of the Deccan, the fate of which is well-known in history. शैवसैन्यं—शिवजीः सैन्यम् ।

नि:श्रीकां राज्यलक्ष्मीं विचलितहृदयाऽपश्यदिंराजवक्त्रां,
निर्व्वाणा मोगलानामपि नृपविभुता हन्त ! साऽस्तं जगाम*॥४०॥

शोभाकोटिकदम्बिता भुवि सिता दिल्ली च तन्मालिनी
या धत्ते जवनेन्द्रकीर्त्तिमतुलां नामाङ्किताट्टालिकाम् ।
नष्टे स्वामिनि कालतः पुनरियं घूर्णायमाणा यया-
विंलण्डेशकुटुम्बिनीमभिमुखीं प्रागेलिजाबेथ्-सखीम्† ॥४१॥

पश्चात्प्रादुरभूत्सखी विजयिनी‡ सेवायिताऽस्याः पुनः
काले तल्पगतामतोलयदिमां भूत्वा करग्राहिणी ।
पादांश्चापि ममार्ज्ज चार्ज्जवगुणालङ्कारचूडामणिः
सेवायै समकल्पयत् जगदिदं सा किं पुनर्वर्ण्यते ? ॥ ४२ ॥

एडोयार्ड् इह सप्तमो नियुयुजे राज्ञ्याज्ञया पालकः
राज्ञीजः प्रथमो यदीयमभवत्सर्व्वेदमत्यद्भुतम् ।

---

* "The subsequent history of the Empire is a mere record of *ruin*. Mahammad Báhádur Sháh was the *last* of the race of Moguls. For his complicity in the *Mutiny of 1857*, he was banished to Rangoon, where he died in *1862*."

† अधुना इंराजाधिकारं (India under British Crown) वर्णयति (४१-४५) । एलिजाबेथ् —Queen Elizabeth, who granted a fresh charter to the East India Company in 1600, who eventually paved the way for the conquest of India.

‡ विजयिनी—Queen Victoria, during whose reign the administration of India was transferred directly to the Crown. *For Queen's life, vide author's "Vijayiní-Kávyam."*

निर्युद्धा निरुपद्रवेयमवनिः सद्भूपपार्श्वं गता
निर्धूतापदसौ कलेव शशिनो नष्टेन्दुपर्व्वोऽधुना * ॥ ४३ ॥
इंराजस्य करङ्गतेयमवनीतीत्थंप्रकारा शनै-
र्भाग्यं भारतवासिनां कुनृपतेर्हस्तादिमुक्तिङ्गतम् ।
कान्तो नास्ति वताद्य सन्ति न तथा क्ला(इ)वादयो वा जना
यैस्तैरेव कृता सुखोन्मुखवती भूभारती भूतले† ॥ ४४ ॥
श्रीमान् लर्ड् लिटनस्तथैव सुमना डफ्रिन् तथाऽन्ये नृपा-
स्तन्त्रावापविदो ययुः कतिपये संस्थाप्य कीर्त्तीरितः ।
नैषां कोऽलमलङ्कृतं समकरोत्पर्व्वेदमानन्ददं
यज्जातं भुवि कार्ज्जनस्य समये पश्यास्य भाग्यं महत्‡ ॥ ४५ ॥
इंराजैः परिपालिते सुनियमै राज्येऽत्र तैर्भारते
नित्यं नाम च सद्विचारपदवी लोकैर्न किं लभ्यते ? ।

---

* एडीयार्ड्—King Edward VII, in commemoration of whose accession, the Coronation-Durbar (पर्व्व) was held at Delhi. इन्दुपर्व्व—चन्द्रग्रहणम् ।

† For Lord Clive and Kánta, *vide* author's "Vijayiní-Kávyam," Canto IX. 1757, the date on which the battle of Plassy was won by Clive in Bengal, was adopted by history as the beginning of the British Empire in the East.

‡ लर्ड् लिटनः—Lord Lytton. During his Viceroyalty Queen Victoria was proclaimed Empress of India at a *Durbar* held on the historic 'ridge' overlooking the Mogul capital of Delhi. डफ्रिन्—Earl of Dufferin. During his time, the Jubilee of H. M. Queen-Empress Victoria was held throughout India. इदं पर्व्व—*i.e.* The Present Coronation-Durbar. "तन्त्रः स्वराष्ट्रचिन्तायाम् आवापः परचिन्तने" ।

राज्यं प्राज्यमराज्यभागपि जनो यस्मिन्नृपानुग्रहात्
सम्प्राप्य प्रियमातनोति च पुनर्भूपायते किं न सः ?* ॥ ४६ ॥

भ्राम्यन्त्यत्र सदैव राजपुरुषा नित्यं प्रजानां हिते
ग्राम्याणां सुखदुःखदर्शनतया, दुष्टांश्च शासन्ति ये।
शृण्वन्त्येव निवेदितं जनगणैः पत्रान्तरे व्याहृतं
किं किं नाम सुखं प्रयाति न जनः ? कः पीड्यते दुर्जनैः ?॥४७

विहाय विद्वेषमपास्य भिन्नतां
नृणां समानीय मिथस्तथैकताम्।
विराजते भारतभर्म्यहीयसी
तदीयपाणिं दधतीव भूयसी† ॥ ४८ ॥

स्मृत्वा दिल्लेर्विगतगुरुतां ये वयं शोकवन्त-
स्तेऽमी दृष्ट्वा नवनरपतिं मोदमाना वसन्तः।

---

* त्रिभिरधुना इंराजशासनस्य महिमा कीर्त्यते (४६—४८)। The three following stanzas speak of the *Cardinal Features* of British Administration in India, *viz.* Equal justice, immunity from oppression, blessing of enlightment and peace, dispensation of mercy in the hour of suffering. 'न किं लभ्यते'—अत्र नञ् काक्वर्थः।

† This stanza speaks of the consolidation and unity of the empire under British rule. Compare :—"The state has succeeded in moulding into a *single whole* the scattered and often warring atoms which hitherto formed the congeries of countries and peoples."—*Extract from the Viceroy's Speech.* तदीयपाणिम्—इंराजजातेः पाणिमित्यर्थः।

